# खण्डनपरिशिष्टम् ॥



स्वस्ति विविध विरुदा वली विराज
मान मानोन्नत राजाधिराज महा
राज द्विजराज काशीराज श्री
महीश्वरो प्रसाद नारायण-
सिंह वीर पुङ्गव धर्म्म पाल
स्या नुज्ञया ।



भट्टपल्ली निवासि वशिष्ठ वंशोद्भव तदीय
सभा पण्डित वरतर्क रत्नोप नाम
श्री तारा चरण शर्म्मणा ।
विरचितम्

आपरि तोषा द्विदुषां
नसा धुमन्ये प्रयोग विज्ञान मिति
शाकुन्तले ॥

बनारस लाइट यन्त्रालये गोपीनाथ
पाठके न मुद्रिता ॥
शकाब्दा १८६४ ।

# विज्ञप्तिरियं विचारकेषु ॥

———ooo———

प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तत इत्यस्य प्रयोजनजिज्ञासायां येहि प्रकाशमिव गाढ़तमांसि भगवदंशविशेषश्रीमन्महर्षिपतंजलिकपिलकणादगोतमव्यासप्रभृति प्रकटितनियमसमाहत्या मुनिकानात्मविशेषगुणाच्छ्रवणमननादिहीनमहाविषयासक्तपंडितम्मन्यजननिचयमनीषाभाससमुद्भासितवाग्जालविशेषाः श्रेयांसि कामयमानानां बुद्धिवृत्तिषु मालिन्यमभिजनयन्तोऽर्थतत्त्वान्यनुद्भास्य तदनुस्यूतपरमप्रयोजनं प्रतिबध्नन्ति तत्प्रतिबन्धकापसरणेन परमप्रयोजनसाधनप्राचीनदर्शनदर्शनप्रवृत्तिरेव प्रयोजनमस्य यदि च रघुनाथ इव रघुनाथः मथुरानाथ इव मथुरानाथः गदाधर इव गदाधरस्तथापरे गुणवत्त

श्रीश्री हरिः

## शरणम् ।

मातस्त्वांवन्धावदन्तिवहवो यद्बुद्धिहन्ति
र्यया, कोवाव:रयितुंक्षमेतद्धिशिवे त्वन्मा-
ययासार्पिता ॥ इत्तिन्तामपसार्य्य दर्श्यस्मि
न्मौ दीनेदयाम्भोनिधे, मूर्त्तिन्तामविचिन्त्य
तत्त्वकणिकां याचेंऽम्बियुष्मात्मिके ॥ १ ॥ न
मामिभक्त्यानियतं, विमलासीतानाथपदा
ब्जयुगम् । यौहिजन्मादिहेतू, अविचिन्त्य-
विभवौनराकृती ॥ २ ॥ सजयतिकाशीराज,
द्विजेश्वरीप्रसादनारायणाख्य । यःप्रपालयति
नित्यं, पुत्रवदखिलदुःखविनाशी ॥ ३ ॥ ज
यतिजयरामनामा, गुरुराद्यःश्रीमानखि-
लगुणधाम । येनार्पितःकरुणया, व्याकर
णादिशास्त्रबोधः ॥ ४ ॥ जयतिराखालचन्द्र
स्तर्ककुमुदचन्द्र कुलाब्धिचन्द्रः । योऽनाशय
दज्ञानं, तर्कास्तकिरणवर्षणेन ॥ ५ ॥ ज-
यतिविशुद्धानन्दः, परमविद्वानोविशुद्धान
न्दः । यस्माद्बुद्धियायवेद, वेदान्तादिदर्शन

बोधः ॥ ६ ॥ नास्तेतथाजगतिकोऽपिबलात्र
लिप्तो, यत्खण्डनायप्रभुखण्डनखंडभिच्छा।
तस्मात्तदीयकथमाचमुपेत्ययत्ना, ह्यारभ्यते
निखिलखण्डकरोनिबन्धः ॥ ७ ॥ यदिवि-
ज्ञातुमुत्सुका, न्यायस्यरहस्यं विजयतिभुवः
ताराचरणविरचितं, पश्यन्तुखण्डनमिष्ट-
मिदम् ॥ ८ ॥ अलङ्कारोऽयमार्य्याणां, स
र्व्वंशोभातिवर्त्तकः । मुक्तासुवदरोभ्रान्तिं,
मावहन्तुमनीषिणः ॥ ९ ॥ लपयाद्व्रस्वन्तु
वचः, खलावानगाःखरतरदशनाग्राः। मा
कुट्टयन्तुचैत, दकिञ्चित्करफलज्ञानेन ॥
१० ॥ अथवाकुट्टयन्त्वेते, तेनकिंस्यादसुष्यतु
अशनौदशनाघात, आत्मपाताधकल्पते ॥
११ ॥ अथाधुना कथायां यदवच्छेदकत्वादि
कं व्यवह्रियते तत् किमर्थमिति जिज्ञासा
यामाधु=निकास्तावन्नैयायिकाः प्रत्यवति
ष्ठन्ते यद्यवच्छेदकत्वादिकं नस्यात् तर्ह्यभाव
विशिष्टबुद्धि प्रतिबध्यप्रतिबन्धकभावादीनां
कस्यापिव्यवस्था नस्यात् तदव्यवस्थाने च
सर्व्वएव व्यवहारा विलोपमर्हेयुः। तथाहि
घटोनास्तीत्यादि विशिष्टबुद्धौ घटत्वादेरव

च्छेदकत्वाद्यनवगाह्य घटप्रतियोगिकाभाव मात्रावगाहने घटोनास्ति नीलघटोनास्ति घटपटोभयं नास्तीत्यादिबुद्धीनां वैलक्षण्यं नस्यात् सर्व्वत्रैवघट प्रतियोगिकत्वाद्यवगाहनात्। अस्माकन्तु घटोनास्तीतिबुद्धौ घटत्वमात्र निष्ठावच्छेदकतानिरूपित प्रतियोगिताकत्वस्य नीलघटो नास्तीति बुद्धौ नीलत्व घटत्व रूपधर्म्मद्वय निष्ठावच्छेदकता द्वयनिरूपित प्रतियोगिताकत्वस्य घटपटो भयंनास्तीति बुद्धौ च घटत्वपटत्वो भयत्वरूपधर्म्मत्रय निष्ठावच्छेदकताक प्रतियोगिता कत्वस्यावगाहनात् विषय वैलक्षण्येनप्रतीति वैलक्षण्यमितिचेत् अस्माकमपि विषयी भूतनीलत्वोभयत्वादिरूपविषय वैलक्षण्यंकथंनतद्वैलक्षण्यंसाधयेत् अवच्छेदकतावैलक्षण्यंतद्वैलक्षण्यं साधयत् ननु नीलत्वादि वैलक्षण्यमितितु भ्रमः उभयोरेवविलक्षणत्वेनतत्प्रयोजकतायांविनिगमकाभावात् अथावच्छेदकत्वाद्यस्वीकारे संयोगेनघटोनास्तीत्यादौ विशिष्टत्वा सम्भवेनैकवाक्यत्वा सम्भवः अस्माकन्तुसंयोगेनेत्यस्य संयोगसम्बन्धाव

च्छिन्नत्वमर्थः तस्यप्रतियोगिनः सम्बन्धेप्रति
योगितायां प्रतियोगितावच्छेदकस्य सम्बन्धे
वा वच्छिन्नप्रतियोगिता यामन्वयस्तथाच सं
योगसम्बन्धावच्छिन्नप्रतियोगिता सम्बन्धेनघ
टवान् अवच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रति-
योगितासम्बन्धेन वाघटत्ववानभाव इत्यक्रा
मेनापि भवद्भिरवच्छेदकत्वमङ्गीकार्य्यमिति
चेन्नविशिष्टबुद्धेरनङ्गीकारात् यथा तदनङ्गी
कारेनदोषस्तथाग्रेवच्यते इच्छामस्वाच्चपुनः
यत्पदोपस्थाप्य संयोगविशिष्टत्वंपदानुपस्था
प्यसंसर्गीभवत् प्रतियोगिताया मवगाह्यत
याप्रतियोगिवैशिष्ट्यमङ्गीक्रियते तच्चसंयोगे
नेत्यस्य संयोगविशिष्टत्व रूपार्थे विषयतासु
अवश्यंसंसर्गावच्छिन्नत्वं स्वीकार्य्यं नहि भ
वतां कश्चित् पदोपस्थाप्यार्थनिष्ठविषयता-
यां संसर्गानवच्छिन्नत्व मुररीकुर्य्यात् तथा-
त्व सर्व्वत्रैव तथास्वीकारसम्भवे विलोपस
ह्रैर्भवतां संसर्गावच्छिन्न विषयत्वं एवं प्रति-
योगितामात्रस्य पदानुपस्थाप्यत्वेन तन्निष्ठ
विषयतायां संसर्गानवच्छिन्नत्वंवक्तव्यमेव सं
सर्गनिष्ठविषयतायां संसर्गावच्छिन्नत्वाङ्गी-

कारे तुल्ययुक्त्यातत् संसर्गस्यापि विषयता यां तयाङ्गीकार्य्यं तत् संसर्गस्यापि तथेत्यन वस्थायामेवपर्य्यवसानंस्यात्तथाचसंसर्गघट केपदोपस्थाप्यांशेसंसर्गावच्छिन्नविषयत्वाव- गाहीतदनुपस्थाप्यांशे तथानवगाहीकोऽय मभिनवोयुक्त्यनुभवविरुद्धोन्तःसिंहाकारःस- म्बन्धःसंयोगविशिष्टघटस्य प्रतियोगितया- भावेभानाङ्गीकारे गतमुक्तयुक्त्यावच्छेदकत्व सिद्धिमत्याशयास्माभिरपि संयोगविशिष्ट घटनिरूपितः संयोगनिरूपित घटनिरूपि तोवाभावो यथा सम्भवंवक्तुं शक्यतएवाएवं संयोगसम्बन्धावच्छिन्न वृत्तित्वाभावस्याव- गाहनेऽस्माभिरपि संयोगनिरूपितवृत्तित्वा- द्यभावस्यवक्तुं शक्यत्वादियमेवरीतिर्यथास्- म्भवं प्रतिभयाकल्प्यता। नचवाच्यं पदार्थयोः परस्परं निरूप्यनिरूपकभावा सम्भवादेक- वाक्यत्वासम्भवः अवच्छेदकत्वादीनामपदा र्थत्वेन तथासम्भवइति अवच्छेदकत्वादीनां पदार्थत्वेऽप्येकवाक्यत्वानुरोधेननि रूप्यनि- रूपकभावस्वीकारे घटत्वादीनामपि तथा ङ्गीकार्य्यं सर्वेषा मेवपदार्थत्वाविशेषात्सर्वथा

ऽवच्छेदत्वादीनाम् पदार्थत्वेतु नह्यपदार्थः कमपि साधयेद्बाधयेद्वा यथा गगनकुसुमादि कं नह्यवच्छेदकत्वादी नि गगणकुसुमवदप- दार्थाद्वितिब्रूमः किन्तु तेषां संसर्गत्वेन पदानु पस्थाप्यत्वादपदार्थत्वङ्किमिति ब्रूत अहो महद् साहसिकं तेषां पदार्थत्वेऽपि तेषां यत्प दोपस्थाप्यत्वानुपस्थाप्यत्वप्रयुक्त निरूप्यनिरू पकभावा नभ्युपगमाभ्युपगमकथनं किन्तत्र नियामकं पदोपस्थाप्यत्वानुपस्थाप्यत्वयोस्त थात्वे वैपरीत्ये नापि वयं क्रमोव्क्रमच नि- यामकाभावात् प्रत्यक्षादौ सर्वेषामेवापदार्थ त्वेनातिप्रसंगात् लाघवाच्चास्माकं तादृश नि र्युक्तिकावच्छेदकत्वाद्यनङ्गीकर्तृणाम्। अ थकेयं वाचोभङ्गिर्यदा तदेवावच्छेदकत्वादि कं पदादुपस्थाप्यं तदा न निरूप्यनिरूपकभा वापन्नं यदा न तथा तदा तथैव तदिति कुतो न जानीमो वयम्। किञ्च तन्निष्ठा वच्छेदकता कप्रतियोगितामात्रं यदि नियामकं तर्हि स्व घटिततरावगाहिप्रतीतितः स्वविषयप्रतीते वैलक्षण्यानुपपत्तिः यदि च घटत्वादिमात्र निष्ठावच्छेदकत्वमवगाह्य प्रतीतिवैलक्षण्य

मंगीक्रियेत तर्हि तत्र यद्घटत्वमात्रनिष्ठा-
वच्छेदकतानिरूपित प्रतियोगिताकत्वंतत्
किंघटत्वनिष्ठावच्छेदकतानिरूपितत्वेसति-
तदन्यनिष्ठावच्छेदकत्वानिरूपित प्रतियो-
गिताकत्वं किस्वावच्छिन्नत्वसम्बन्धेन घट
त्वविशिष्टत्वेसति तादृशसम्बन्धे= नतदन्य
वदन्य प्रतियोगिताकत्वंनाद्य: तदन्यनिष्ठा
वच्छेदकत्वानिरूपितत्वघटकीभूतात्यन्ताभा
वभेदयोस्तथैव विशिष्टाभावादिकमादायत
द्दोषतादवस्थ्यात् अतएव नद्वितीय: तत्रापि
भेदद्वयघटितत्वेन तथैवविशिष्टभेदादानस-
म्भवात् पुनस्तादृशाभावे तथानिवेशस्तुल्य-
युक्त्या तत्रापितथातत्रापि तथेत्यनवस्थाया
मेवपर्य्यवसानात् नचेयमनवस्था वीजांकुर
वत् प्रामाणिकोवीजांकुररूप फलद्वयस्य प्र
त्यक्ष सिद्धपरस्परजन्यजनकतापन्नस्य सर्वैर
विप्रतिपद्यमानत्वे = न तत्रानवस्थाया: प्रा
माणिकत्वात् स्वत: सिद्धेतराघटितव्यक्ति
विशेषात् तादृशव्यक्तिविशेषोत्पत्त्या फल-
निर्वाहा च्च अत्रतुपदार्थान्तरं विनाभव-
न्मते स्वरूपानिर्वाहेणानिरूपणा विघटकत्वे

नास्याद्दूषकत्वात् तथाच गौतमसूत्रे विश्व
नाथवृत्तौ नहिप्रमाणात् प्रमेयसिद्धौ प्रमा
णसिद्धिरपेक्षिता यदा प्रमाणसिद्धिरपेक्षि
ता तदातत्रापि प्रमाणमपेक्ष्यताम् तच्चानु
मानादिकमेवेति न प्रमाणान्तरकल्पनान
वानवस्थासर्वंच प्रमाणसिद्धेरनपेक्षितत्वा
त् क्वचिद्बीजांकुरवदपेक्षापिनक्षतिकरीत्या
दिकिंचदूरेऽस्तुतावत् प्रत्यक्षगोचरतानह्य
न्येकेचनप्रामाणिकाः कदाचिन्मनसाप्यङ्गी
कुर्वन्ति सन्दिहतेवावच्छेदकत्वा दीनिप्रा-
माणिकत्वे दर्शनीयन्तावत् प्राचीनाचार्य्य-
वाक्य येनवयंप्रतीमःअदर्शनीयत्वे तुशक्तिग्र
हासम्भवेनकस्याप्यननुभावकत्वात् शक्तिग्र
हेव्याकरणादीनांहेतुत्वात् नहिभवन्मतसि
द्धार्थवाचकतयाव्याकरणादीन्यवच्छेदकत्वा
द्यामनंतितथाहिशक्तिग्रहोव्याकरणोपमान
कोषाप्तवाक्याद्व्यवहारतश्चेत्याद्युद्गीयतेशिष्टै
रितिअस्ववाचकंपारिभाषिकमेवतदितिचे
द्याद्दृशार्थेनाद्दृशपदंपरिभाष्यतेदर्शनीयस्ता
वानर्थःश्रुत्याद्यनुमतःअदर्शनीयत्वे षोडशप
दार्थादितत्वज्ञानान्निःश्रेयसवादिनांएतद

नभिज्ञश्वेतकेतुप्रभृतीनांमोक्षभङ्गप्रसङ्गस्य
दुर्निवारत्वात् अप्रामाण्यापत्तेश्च तथाभि-
धायिनांश्रुत्यादीनां असर्वज्ञत्वप्रसङ्गाच्चकपि
लादीनां इष्टापत्तिमाश्रित्यस्वकपोलकल्पि
तत्वे प्रमाणस्यवक्तृव्यतापाताच्च नहिवादि-
नोभवन्तस्तथा प्रामाणिकायेनवेदाद्यर्थवत्
भवतांवच:स्वत: प्रमाणपथमर्हेत् तथापि-
मोक्षभङ्गादिदोषादुर्निवाराएवमनसितेषा
मासीदुक्तितोनाभिहितमेतदिति कल्पनन्तु
स्वमनमात्रंलौकिकनिर्युक्तिकवाक्यात्तादृशा-
लौकिकार्थराशिसम्भावनेच्छा धुनिकाअपि
प्रतारका: किमपि वक्तुंशक्नुवन्तियदुत्तरेषा
मवच्छेदकत्वादवत् प्रामाणिकत्वमालम्ब्य
मोहमुत्पादयिष्येत् अथास्त्वनवस्थाकोदोषइ
तिचेत् निरूपणाभावएवनिरूपण कर्तृभि-
मानिनांस: । अथ निरूपणेऽनवस्थाया:
किंहेत्वाभासतयाउतस्वातन्त्र्येणनाद्य: उ-
क्तव्यतापातात् नद्वितीय: निर्युक्तिकत्वेना
प्रामाणिकत्वात् इष्टापत्तौ अन्यादृशस्या-
पिकस्यचित् सर्वचकल्पनप्रसङ्गात् तंचापी
ष्टापत्तौ सर्वचैवतयाकिञ्चित् स्वाभिप्रेतक-

त्वनासम्भवेन निरूपणमाचा नवकाशप्रस
ङ्गादितिचेत् ष्टच्छन्तांतावत् स्वाचार्य्यैर्ये
रेवोद्भाविता आपत्याचानिर्वाच्य वादसिद्धि
रेवेष्टलाभोभवद्भिः करेदत्तः किञ्चनस्वात
न्त्ये णकिन्तुतत् साधनेव्यभिचारादिज्ञानज
नकत्वेन। अ।एवंतस्साधनेव्यभिचारादिस
न्देहेतज्जनितायाः प्रमात्वासम्भवेनतद्विष-
यस्यासिद्धिः अथयदभावादिवैलक्षण्यसाधने
व्यभिचारादिशङ्काजनकत्वमनवस्थायाः त
त्किंस्वातन्त्यात् विप्रत्तिपत्तिवाक्यात्साधा
रणधर्मवद्धर्म्मिग्रहात्असाधारणधर्म्मवद्धर्म्मि
ग्रहाद्वास्वातन्त्येण संशायकत्वेमानाभावए-
व दोषदूतरेषाञ्च तथात्वे तदुद्भावनप्रसङ्गः
स्यादितिचेन्नविप्रतिपत्ति वाक्यादेरेवतथा
त्वात्। विप्रतिपत्तिवाक्यमात्रस्यतथात्वे स
र्वेचैवसर्वेषामनायासेनतथाप्रयोगसम्भवात्प्र
योगमात्रकारिण एवविजयेरन्निति चेन्नच्च-
त्यभावात्तनैवानिर्वाच्यवादसिद्धेश्चकिञ्चवि
प्रतिपत्तिवाक्यमात्रस्यनतथात्वंकिन्तुतुल्यत्र
लोभय कोटिकस्यैव अचतथासम्भवात् तथा
हितन्मात्रनिष्ठावच्छेदकताप्रतियोताकत्वं

नाभाववैलक्षण्यप्रयोजकं उभयाभावादिघटि
तत्वे नातिप्रसञ्जकत्वात् एवं तादृशावच्छेद
कताकप्रतियोगिताकत्वे तादृशाभाववैलक्ष
ण्यप्रयोजकत्वनिरूपणस्यासम्भवात् तदभाव
वैलक्षण्यप्रयोजकत्वाभावसहचरितोभया--
भावादि घटितत्वरूपसाधारणधर्म्मवत्त्वेन सं
शयस्यैवोदयात् विशेषदर्शनादेस्तन्निवर्तक
त्वे दर्श्यतामेवतत् येन स निर्वर्तेत तदर्थमेव पृ
च्छामो न तु वितण्डायै । सर्वांशेषभासन्त्या
वत्पृच्छा तत्तावद्दुर्लक्ष्यमिति चेन्न महानुभ
वो भवतां येना नवस्थादोषपातितया सीमैव
नावगम्यते तेषां सर्वत्वे न विषयीकर्त्तुमुद्यमत्र
ताम् । अथ वादिनां यावदेव शङ्का तावन्निरू
पणीयं दृश्यन्ते हि वादिनश्चितु: कदापर्य-
न्तधाविनश्चतो निवर्त्तन्त इति नानवस्थेति
चेत् यद्वादिनश्चितु: कदाधाविनो निवर्त्त
न्ते तत्कस्य हेतो: किमाप्तवचनाद्धर्मलिप्सया पा
पजिहासया वा उत नियमाधीनतया किम्वा
प्रतिभानाशेन आहोस्विन्निग्रहभीत्या नाद्य: द
र्शनीया तावत् तदन्तर्वर्त्तिनां पुरुषश्रुति: पा
पश्रुतिर्वोत्तरगामिनाम् । न द्वितीय: नियमो

हिसार्वभौमेन कृतोभवद्भिरीश्वरेणवातस्य सार्वभौमत्वे राजाज्ञालङ्घनभयेन यदिचव हिर्निवर्तामहेवयं मनस्तुधावत्येव यावन्नस्यै र्व्यानुकूलदेशमुपलभेतननिवृत्तिरपि वहि- र्येनतथानोपलभ्यते। भवत्कृतत्वेतुवहिरपि निवृत्तिर्नास्माकं दूरेस्तु चेतसोवार्त्ता ईश्व- रकृतत्वे चदर्शनीयस्तावानसौ योनःस्वाय त्तान्कुर्य्यात् वयमेवनियमकारिणः चेदस्मा कंनियमंनपालयततर्हिनियमलंघिनो वैत स्मिकादितिमन्वानावाग्व्यवहारानेवत्यजाम इतिचेद्ब्रूततदा वयमपिकिञ्चिन्नियमंकुर्वी णायूयमस्माइतिमन्यमानाः प्रीताभवामः किन्त्वभवतांवाग्व्यवहारत्यागएवास्माकमा- यासःसचेत्स्वतएवत्यज्यतेभवद्भिस्तर्हि अर्केचे न्मधुविन्देत किमर्थंपर्वतंव्रजेदितिन्याये नव यमपिजिज्ञासातोनिवृत्तिमास्थाम: नवयं परस्परंवाग्व्यवहारंत्यजामः किन्तुयुष्माभि रितिचेत् तेनमातरिपुरुषतैवभवतांसम्पद्ये तनहिकश्चिद्वादिभिः परीक्षामंतरेणार्थः क मपिप्रत्याययतितथाहिगौतमसूत्रभाष्येभग वान् वात्स्यायनः त्रिविधाचास्यशास्त्रस्यप्रवृ-

त्तिः उद्देशोलक्षणंपरीक्षाचेतितत्रनामधेये
न पदार्थस्याभिधानमुद्देशः तत्रोद्दिष्टस्यात
त्त्वव्यवच्छेदकोधर्म्मोलक्षणंलक्षितस्य यथा
लक्षणमुपपद्यतेनवेतिप्रमाणैरर्थावधारणं-
परीक्षेति । एवंभवद्भिर्यदैवकथारभ्यतेतदैव
पृच्छामः उत्तरस्यादानेदानेवोभय थैवभ-
वतोवयंजेष्यामः निवृत्तिश्चेदिष्टलाभएवा-
स्माकंद्रक्ष्यन्तिचसामाजिकाः किन्त्वत्रिचतुः
कक्षोत्तरंदोषार्पणमकिञ्चित्करमितिकुतः
शिक्षितमाचार्यवाक्यात्स्वतोवायद्याचार्य्य
वाक्यंदर्शनीयंतत् स्वतश्चेत्पालयन्तुतावत
क्रीतदासाद्वप्रभोराज्ञामन्तेवासिनः स्व-
धानेनैतावद्वक्तव्यमितिनियमंवद्धाप्रवर्त्तिता
यांकथायांतादृशनियमलंघिनामस्तुपराज-
योविजयोवानियमपालिनांनवयंतथा निय
मकारिणोयेन तदुल्लङ्घनेपराजयञ्चाहीमः
पृच्छामः पुनरस्तुवातादृशानियमिनां तथा
तेनतत्वनिरूपणस्यकागतिराधातानहिनि-
यमस्यपालनं हेलनञ्चातत्त्वंव्यवस्थापयेदुत्ता
पसारयेत् । नतृतीयः प्रतिभाछन्न्यस्यतदुत्त
रगमनाभावेयतथातेमागच्छन्तुवयंहिकथं-

नगच्छामः नह्यस्माकंप्रतिभान्तिचतुःकथा
वसन्ना किन्तुयावच्चग्रङ्का तावदेनसञ्चारि
णीतिएवञ्च त् किमपिनस्थैर्य्यमावहेत् स-
र्वत्रैवकस्याश्चित् ग्रङ्कायाः सम्भवादितिचे-
द्गागच्छन्तु पथितावदस्माक मनिर्वाच्यवादि
नांछेदयन्तुचदासत्त्वश्टङ्खलम्। नचतुर्थःदो
षसुद्भाव्यापिचेदस्माकं निग्रहस्थाननिपातः
केपुनस्तर्हिविजयिन इतिनजानीमोवयंकि-
ञ्चभवन्नयेयेदोषसुद्भावयन्ति तेयदिनिग्रह-
स्थानमापन्नायूयमप्यस्मदुचसिदोषसुद्भावयि
तुमिच्छन्तः कथंनतथासम्भाव्याइति। अथो
त्तरगमनेदोषाग्रङ्कायाअनिष्टत्तेस्तत्वनिरूप
णाभावेननास्तिक्यापत्तिरेवदोषइतितदुत्त-
रंगत्वाग्रङ्कावतारिणां निग्रहस्थानत्वमुद्भा
व्यतेभिष्टैरितिचेन्नइष्टेश निग्रहस्थानस्यभव
दाचार्य्यैरनुद्भाव्यमानत्वात् उद्भाव्यमानत्वे
किमेतत् प्रतिज्ञाहान्यादिनिग्रहस्थानानां-
नास्तिक्यापत्तिसम्भावनयादोषत्वाकलयत-
ह्यातुर्निग्रहस्थानत्वेभवदाचार्य्यणांयुक्तानां
स्तिक्यमतनिरासोपायसूत्रवैफल्यात् भवत्-
त्तनञ्चेन्नादरणीयंवादिवाक्यत्वात् अन्यथा

भवत् छतञ्चे न्मम निग्रहायमत् छतञ्चकिं नभवतोनिग्रह्लीयात् किंच्यस्यविनिगमकंत चापिकश्चिन्नियमोभवद्भिः क्रियेतचेत् मया पितथाकश्चित् स्वाभिप्रेतः कर्तुंशक्यतएवउ भयोरेवजीवत्त्वेनाल्यज्ञत्वात् परस्परछतंप- रस्परंनिग्रहीतुंशक्नुयात् तेनैवपर्य्यवसानंवि तण्डायाः सिद्धिस्थानिर्वाच्यवादस्य। अथवि तण्डायावैफल्यस्यसर्वतन्त्रसिद्धान्ततयाताद्द शसिद्धान्तंविलंघ्यतत् कारिणामकामेनापि निग्रहस्थाननिपतनंतथाचगौतमसूत्रस्यभा ष्येवात्स्यायनः वितण्डया प्रवर्त्तमानो वैत- ण्डिकः सप्रयोजनमनुयुक्तोयदिप्रतिपाद्यते सोऽस्यपक्षः सोऽस्यसिद्धान्तइतिवैतण्डिक- त्वंजहाति अथनप्रतिपद्यते नायंलौकिकोन वापरीक्षकइत्यापद्यतइत्याहेत्युक्तौच विश्व- नाथः कथाधिकारिणस्तुतत्वनिर्णयविजया भिलाषिणः सर्वसिद्धानुभवान प्रलापिनः श्र वणादिपटवोकलहकारिणः कथौपयिकव्या पारसमर्थाइतिश्रतएववैततण्डिकत्त्वेनकथा धिकाराभावादुपेक्ष्या एवशिष्टैर्भवन्तइतिचे त् वितण्डायायदपसिद्धान्तत्वंतत् कस्यहेतोः

किंदोषग्रस्तत्वात् उतसर्वैरनङ्गीकारात् किं
वातत्वनिरूपणप्रतिबन्धात् नाद्यः दोषग्रस्त
त्वेतत्त्वनुज्ञावनीयतामर्हन्ति अनुज्ञावनीयत्वे
तदनवकाशप्रसङ्गेनतस्याएवसर्वतन्त्रसिद्धा-
न्तत्वाभ्युवगमस्यावश्यकत्वात् नचवाच्यंनो-
ज्ञाव्यत्वेऽपिसन्तेएवतेकश्चिदुज्ञावयिस्यतीति
मयापितथावक्तुंशक्यत्वात् नद्वितीयः तचस
र्वशब्देनप्राणिसमुदायोव्युत्पन्नसमुदायोभव
त् सम्प्रदायसमुदायोवाप्राणिसमुदायत्वेऽस
म्भवः नहिवितण्डायाअपसिद्धान्तत्वमाकी
टान्मनुष्यपर्य्यन्तंसर्वैजानन्ति व्युत्पन्नसमुदा
यत्वेऽस्माकमनभ्युपगमेनतथैवासम्भवोदुर्नि
वारः नयूयंव्युत्पन्नाः सिद्धान्तमपलाप्यानि
र्वाच्यवादित्वेनैववैतण्डिकाइतिचेत् यूयम-
ज्ञायुक्तितर्कानभिज्ञत्वाद्दनिरूप्य निरूपणा-
कामाइति वयमपिवक्तुंशक्नुमः इयमपिवि
तण्डेतित्याज्येतिचेत् अत्रापिपूर्ववत्त्यागहे
तुजिज्ञासायांपुनरेवतथासम्भवः पुनरपित
चतथासम्भवे तत्रासम्भवधारायामनिरूपण
मेवपर्य्यवसानंचरमेसाधयेदेवानिर्वाच्यवाद
मिति किञ्चयुक्त्यानिरूपयितुमसमर्थोअसी

मविश्वरचयितुर्दुनिरूप्यतत्वानिजगन्ति सुतरामनिर्वाच्यवादरूपप्रकृततत्वपराः परमप्रामाणिकाआस्तिकवराश्चेद प्रमाणिकाभवदुक्त्यातर्हि ताद्दृशविजयमन्त्रपाठात्प्राक्त्वविज्ञातंविजानतां विज्ञातमविजानतामिति यस्या मतं तस्यमतं मतं यस्य नवेदसइति अचिन्त्याः खलुयेभावा नतांस्तर्कैणयोजयेदित्यादिश्रुतिस्मृतीनामप्रामाण्यमोक्ताख्वे नयोजनीयमिति। भवत्सम्प्रदायसमुदायस्यैवादिवाक्यतया संशायकत्वेन तत्रापि कथाप्रवृत्तिरनपाया। नह्तनोयः इष्टापत्तेः येनभवतामयाभवदाचार्य्यैवा वायन्निरूपितंतदेवतत्वमितिनज्ञातोसः किञ्च निरूपितञ्चेत् तत्वंतत्कथयतदोषरहितञ्चेत श्रोष्यामः त्वच्यामसत्त्वादान् किञ्चनवयं विफलवितण्डाकारिणः परन्तु विजयकामिनस्तत्वलिप्सवोवातेनापिवितण्डावकाशात् अन्यथा तस्याः कथात्वासम्भवः तथाचगौतमसूत्रभाष्ये वात्स्यायनः तिस्रःकथाभवन्तिवादोजल्पोवितण्डाचेति अतएवोक्तभाष्यादीनां तत्रैवतात्पर्य्यंकल्पनीयं अन्यथास्ववचनवि-

रोधेनाचार्य्याणामुन्मत्तप्रलापोदुर्निवारएव किन्तु । किंकुर्म्मोदुर्लभंलोके जगत्तत्वनिरूपणम् । घोषत्यर्थमेवेमं निर्दोषश्रुतिडिण्डिमः ॥ अतएव । येनयत्कल्पितंकिञ्चित् तत्स्यमतिजृम्भणम् । अचिन्त्यरचनंविष्णोर्जगदेतन्ननिर्वचम् ॥ एतेन यदनिर्वाच्यवादिनो यूयंतस्यापि कुतः सिद्धिस्तत्साधनेपि दोषस्यानिस्तारादित्यप्यपास्तं येन नवयमनिर्वाच्यपक्षावलम्बिनः किन्तु जिज्ञासवएव फलतस्तत् सिद्धेः सएवपक्षः सम्भतत्वे नायातिकिञ्चअनिर्वाच्यपक्षेदोषप्रदानेऽपिभवत्पक्षेऽपितत्सत्वे न निरूपणासम्भवेन तत् सिद्धिरप्रत्यूहैवअपरञ्चावच्छेदकत्वास्वीकारेण यदिनास्तिक्यं स्यात् तत्स्वीकारेणापि कथंनस्यात् अत्र किंनियामकंवरंतदस्वीकर्त्तुरेव वेदानुगामित्वं नतुतत् स्वीकर्तुरवच्छेदकत्वस्यवेदवाह्यत्वात् तर्हि धर्म्मादिकंकेननिरूपणीयं सर्वंचैवशङ्काकवलितत्वात् इति चेत् श्रुतिभिः तत्रापियुक्तिरपच्येतिचेत्तत्तासांस्वतः प्रामाण्यात् स्वतः प्रमाणंयद्यनभिमतंतर्हि भवन्तएव प्रविशन्तु नास्तिक

सरणिं वयन्तु तादृश पर्य्यन्तु योगंनार्हाम:
श्रुतीनांस्वत: प्रामाण्यवादिन: नास्तिना
स्तिकसरणावपिनिस्तार: तत्रापिप्रमाणनि
त्नासायामनिर्वाच्यवाद एव पर्य्यवसानादि
तिवच्याम: एवञ्चेदस्तुमसामर्थ्यात्सुतराम-
सद्वादिभ्य: को विशेष: सौगतेभ्योभवतामि
तिनचवाच्यंतेहिनिरूपयितुमसमर्था: सर्व-
मेवासदितिसिद्धान्तपरा ब्रह्मवादिनस्तु त-
थाभवन्तोऽपिनतत्रसिद्धान्तपरा इतिविशेष:
अतएवखण्डनाचार्य्यपादा:बुद्ध्याविविच्यमा
ननांस्वभावोनावधार्य्यते। अतोनिरभिला
प्यास्ते नि:स्वभावास्तदेशिता इति ज्ञानव्य
तिरिक्तं पुनरिदं विश्वंसदसत्त्वाभ्यामनिर्वचनी
यं ब्रह्मवादिन:सङ्गिरन्तइति। अथज्ञानस्य
सत्वं कुतोऽङ्गी क्रियते कथंन विषयस्यवा-
क्यात्तथाङ्गीकारेउभयोरेवतत्सम्भवादिति-
चेन्न विधिनिषेधयोर्द्वयोरेवज्ञानभास्यत्वा
त् अन्यथोभावपिननिष्पद्येयातां अनिष्पत्ति
रपि तयोस्त्यकामेनापिज्ञानसत्वमङ्गीकार्य्य
म् यदिचयथाज्ञानं विषयमवभासयेत् विष
योऽपिज्ञानं प्रत्यूज्जोवयेदितिविषयंविना

तदुदयासम्भवे नविषयस्या पिसत्त्वमवश्यं-
स्वीकार्य्यं परस्परस्य परस्परापेक्षत्वात् त-
थापिज्ञानानांसर्वानुस्यूतत्वस्योभयवादिसि
द्धत्वात् । तस्यप्रामाण्यमावश्यकं विषयस्य
तथाभावान्नतथा अथविषयत्वे नमिथ्यात्वा
भ्युपगमेज्ञानस्यापि स्वानुव्यवसायभास्यत्वे
नविषत्वात् तन्मिथ्यात्त्वापत्तिर्दुर्निवारानच
वाच्यंतथापिज्ञानस्यसत्त्वात्तत्प्रामाण्यमि-
ति तच ज्ञानस्य सत्त्वेऽपिव्यक्तौ भिन्नत्वात्
नाममात्रत्त्वेनस्वरूपभेदवतांज्ञानानामभे
दांगीकारे विषयत्वादिना विषयादेरनुग
मेनसर्वानुस्यूति सम्भवादितिचेद्यथाज्ञान
स्यस्वप्रकाशत्वंतथाद्रष्टव्यमाकरेतथापिकि
ञ्चिद्वच्यामः । यत्रज्ञानस्यस्वप्रकाशत्वमन
ङ्गीकृत्यस्वानुव्यवसायभास्यत्वमिच्छतत्रप्ट
च्छामः स्वानुव्यवसायः केनभास्यते स्वानुव्य
वसायेनेतिचेत्सोऽपिकेनसोऽपितेनेतिचेत्सोऽ
पिकेनेतिजिज्ञासा यामनवस्थायामेवपर्य्य-
सानमिष्टापत्तावात्मविशेषगुणद्वयस्ययौग
पद्याभावेनस्वदैवताद्दृश्यमानस्वव्यवसायधा
रैवोत्पद्यतांनोत्पद्यन्ताश्चे तरज्ञानेच्छादी

नितचापीष्टापत्तेर्बाधकएवसर्वेषांस्वानुभवः स्वप्नसुषुप्तिसत्त्वभावादि प्रसङ्गस्यदुर्निवारः क्वचिद्गत्त्वा विश्रामे चरमस्येदप्रकाशमानः स्वस्प्रकाशयेत्तर्हिकिमपराद्धं प्रथमेनयेनस बोधः स्वन्नप्रकाशयति उभयोरेवज्ञानत्वा विशेषाच्चरमस्येदप्रकाशः पथिप्रदर्शकान्ध-न्यायेन सर्वाण्येवनिपतनमर्हेयुस्तर्ह्यकामे-नापिज्ञानस्य स्वप्रकाशत्व मङ्गीकार्य्यन्त नैवतत् सत्वसिद्धिर्नतुविषयाणाम्। अथच-रमस्यैव स्वप्रकाशत्वमङ्गीक्रियतान्तेनैव स कलज्ञानानाम्प्रकाशसम्भवः। सर्वेषांस्वप्र-काशत्वाङ्गीकारेतत्कल्पनायाङ्गौरवञ्च न-चचरमस्य स्वप्रकाशत्वाङ्गीकारे विनगम-मेवलाघवंनसम्भवति ज्ञानभास्यत्वस्याप्य-धिकस्यकल्पनात्। भास्यत्वस्यानतिरिक्त-त्वस्वीकारेऽपिननिस्तारः। तस्यज्ञानरूप तयाधर्म्मविशेषरूपप्रकाशरूपत्वा सम्भवादि ष्टापत्तौस्वात्मन्येवपर्य्यवसानात् किम्भास्य त्वेनअतिरिक्तकल्पनेतु विनिगमनाविरह-स्यदुर्निवारत्वादितिवाच्यम् ज्ञानानांस्वप्र काशत्वाङ्गीकारे विशिष्टानुभवम्प्रति विशे-

षयज्ञानस्य कारणताधौव्येप्राथमिकविशि-
ष्टानुभवस्यान्यथानुपपत्याततःप्राक्तत्साम-
ग्राकल्पनीयान्निर्विकल्पकात्कोविशेषः स-
विल्पकानामुभयस्यैव ज्ञानत्वेनाविशेषतः
स्वप्रकाशत्वसिद्धावतीन्द्रिया नतीन्द्रियत्वव्य
वस्थाभङ्गप्रसङ्गात्। अस्माकन्तुज्ञानस्यज्ञा-
नभास्यतयाप्रकाशत्वेनिर्विकल्पस्यातीन्द्रिय
तयातत्साक्षात्कारासत्याप्रकाश त्वासम्भ
वात् तयोर्विशेषोपपत्ति रितिचेन्न साक्षा-
त्कारप्रतिविषयस्यहेतुत्वे ननिर्विकल्पस्यले
तादृश विषयसत्त्वेनतदनुव्यवसायस्यदुर्निवा
रत्वात् योग्यत्वेन साक्षात्कारप्रतिकिञ्चि
त्प्रकारकत्वेनज्ञानसाक्षात्कारप्रतिवावि
षयस्यहेतुत्वस्यकल्प्यनिर्विकल्पस्यानुव्यवसा
यवारणेऽस्माभिरपियोग्यज्ञानत्वे नकिञ्चि
त्प्रकारकज्ञानत्त्वेनवास्वप्रकाशत्व प्रयोजकं
त्वकल्पनसम्भवाच्च ;नचवाच्यमेतदस्तुसमा
नम्भवद्भिस्स्वप्रकाशत्वं कल्प्यतामस्माभिरनु
व्यवसायभास्यत्वं कल्प्यते किमत्रनियामक
मितिभवताञ्चरमस्यस्वप्रकाशत्वमितरेषा
मनुव्यवसायभास्यत्वञ्चकल्पयताम्मदार्थद्वय

कल्पनप्रसङ्गात् अस्माकन्तुस्वप्रकाशत्वेनैवप्र
त्यवसानादितिकृतम्पल्लवितेन। किञ्चनपु
नर्निर्विकल्पकमतीन्द्रियमितिप्रतीमःतस्या-
पिस्वप्रकाशत्वात् स्वरूपमात्रविषयत्वेनाभि
लापासम्भवात् अतएवयोगभाष्ये भगवन्ना
रायणव्यासपादाःयदापुनश्शब्दसङ्केतस्मृति
परिशुद्धौश्रुतानुमानज्ञान विकल्पशून्यायां
समाधिप्रज्ञायां स्वरूपमात्रेणावस्थितोऽर्थः
तत्स्वरूपाकारमात्रतयैवावच्छिद्यतेसाचनि
र्वितर्कासमापत्तिस्तत्परम्प्रत्यक्षम् तच्चश्रुता
नुमानयोर्बीजमित्यादि तद्व्याख्यानेचषड्द
र्शनटीकाकृद्वाचस्पतिमिश्राः तस्मादविक
ल्पेनप्रत्यक्षेणगृहीत्वाविकल्प्योपदिशन्तिउ
पपादयन्तिचेत्यादि तदपिचातीन्द्रियमिति
नुनाशङ्कनीयम् तत्रैवभाष्येसद्भूतमर्थंद्यो
तयतीत्यादि तद्व्याख्यानेच तत्कृतेद्योतनं-
हितत्त्वज्ञानमागमादनुमानाद्वा भवदपि-
परोक्षरूपतयानसाक्षात्कारवतीमविद्यामु
च्छिनत्तिद्विचन्द्रदिङ्मोहादिवदनुच्छेदकत्वा
त्। अतआहप्रेति। प्रशब्दोहिप्रकर्षन्द्योतय
त्साक्षात्कारं सूचयतीत्यादि योगिनान्तुत-

न्नास्माकमितिचेत् भवतामनुव्यवसायं वि-
नातत्प्रकाशानुपपत्तेरतस्या नुव्यवसायस्वी
कारेतुल्ययुक्त्या लोकेऽपितन्निर्विकल्पानुव्य-
वसायो दुर्वारः। लोकेनानुभवद्भूतिप्रतिबन्ध
ककल्पनमितिअस्माकमपितथाकल्पयितुंश
क्यत्वात्तथैवोक्तप्रायस्च किञ्चयोगिनांनिर्वि
कल्पस्य प्रकाशत्त्वानङ्गीकारेस्व यमप्रकाश
स्य परप्रकाशानर्हतयाते नविषयप्रकाशास
म्भवेनतदुपदेशासम्भवात्। अतएवज्ञाना-
नांस्वप्रकाशत्वसिद्धौनिराबाधायाम्। ज्ञा-
नेन ज्ञानमन्येन प्रकाश्यमभिवाञ्छतादीप
सन्दीपनायादौदीपान्तरमपेच्यताम्। अथ
ज्ञानानांयत् स्वप्रकाशत्वमिच्छततत्प्रत्यच्च
मनुमानंशाब्दंवानाद्यः तत्रास्माकं विवादा
त् नद्वितीयः तत्रज्ञानत्वे नकिञ्चित्प्रकार-
कज्ञानत्वेनवा स्वप्रकाशत्वानुमानेक्रमाद्वि
शिष्टविषय कत्वस्यानुव्यवसायाविषय त्वस्य
चोपाधित्वसम्भवात् व्यभिचारप्रमाण्यश-
ङ्काद्यनिवृत्तेश्च तन्निवारणार्थंल्लक्षावतारे-
तस्य व्याप्तिज्ञानजन्यत्वे न तज्ज्ञानासम्भ-
वात्तत्रापिव्यभिचारशङ्काद्यनिवृत्तेः तत्रापि

तथादरेनवस्थाप्रसङ्गात् अतएवशारीरकसू
त्रंतर्कस्याप्रतिष्ठानादिति अनादरेवासंशय-
याद्यनिवृत्तेः नतृतीयः आप्तवचनाभावात्
अनाप्तवचनात्तथाङ्गीकारे विपरीत वाक्य
स्यापिसम्भवे संशयाद्यनिवृत्ते रितिचेन्नज्ञा
नानामनुव्यवसायभास्यत्वपक्षेऽपिभवदुक्त-
जिज्ञासावद् जिज्ञासोदये तथैवदोषसमुदा
यप्रसंगात् अतएवकथायांसमसाधोपालम्भ
पक्षप्रतिपक्षसर्वभक्षभक्षितायां मौनमवलं
ब्यानिर्वाच्यवादिनांसिद्धान्तशय्याशयनमेव
शरणमुभयेषामिति अथतथापिवेदस्यस्वतः
प्रामाण्यवादिनां वेदार्थस्यनिरूपणेनकथ-
मनिर्वाच्यवादिता अनिरूपणेवातथैव ना-
स्तिक्यापत्तिरितिचेदागच्छंतुतावत् पथिकिं
वेदस्यस्वतःप्रमाण्यंभवंतोप्यङ्गीकुर्वंतिसाधु-
भोः साधुश्रूयतां नहिश्रुतयः पारमार्थिक
स्यनिरूपणीयत्वंकथयंति किंतुव्यवहारिका
णांयदिचयःसर्वज्ञः सर्ववित् यस्यज्ञानमयं
तपइतिद्वेब्रम्हणोवेदितव्येपरंचापरमेवचेति
आनंदं ब्रम्हणोरूपंतच्चमोक्षे प्रतिष्ठितमिति
आत्मावाअरेश्रोतव्योमंतव्यइत्यादिभिरात्म

नः स्वरूपनिर्वचनात् कथंनपारमार्थिकस्य
निरूपकत्वं वेदानामात्मनएवभवन्त्येपार-
मार्थिकत्वादिति तथापिअरेरे नद्दष्टेर्द्रष्टा-
रंपश्येर्नश्रुतेः श्रोतारंशृणुयांनविज्ञातेर्वि-
ज्ञातारंविजानीयामिति अविज्ञातं विजा-
नतां विज्ञातमविजानतामिति यस्यामतं-
तस्यमतंमतंयस्यनवेदसइति सदेवसौम्येद
मग्रआसीदिति असदेववाइदमग्रआसीदि
ति नेहनानास्ति किंचनेति सर्वंखल्विदंब्र-
ह्मेतिएकमेवाद्वितीयमित्यादिकाअपिनिगि-
रंतितत्वस्यानिर्वाच्यतादिकंश्रुतयः तथाच
तासांपरस्परविरोधपरिहारायावस्यमधि-
कारिभेदोऽङ्गीकार्यः अन्यथापरस्परविरो
धेनपरस्पराप्रामाण्यमेवप्रसज्य न लक्षणा
वृत्ति मवलम्ब्य स्वमतस्याभियोज्यत्व विरो-
धिनामपिविपरीतत्वेन तथाभियोगसम्भ
वात् इष्टापत्तौ केचनानर्थभागिनःस्युरिति
तद्विषयेप्रवृत्त्यनुदयप्रसङ्गेन कर्मोच्छेदप्रसं
गोदुर्वारएवस्यात् अतएव प्राभाकरादयः
प्रकृपदस्यैवानुभावकत्वमङ्गीकुर्वन्तिसूत्रभा
ष्यप्रवरस्वामिनोऽपिलोकेयेष्वर्थेषु प्रसिद्धा

निषद्धानिसतिसम्भवे तदर्थान्येवसूत्रेष्वित्य वगंतव्यं । नाध्याहारादिभिरेषांपरिकल्प नीयोऽर्थः परिभाषितव्योवा एवंवेदवाक्यान्ये वएभिर्व्याख्येयानीति । विधौनपरः शब्दा र्थइतिजैमिनिसूत्रमपि ॥

अतएवतासांविरोधपरीहारायाबद्धमविकारिभेदांऽगीकारेह्यविद्यावंतोनिरूपणाधिकारिणः तेषां तथा भमानदर्शनात् तच्छून्याएवविपरीता विपरीतदर्शनादितिकल्पनीयं । अचविपरीतशंकातुनकार्य्याप्रत्यक्षरिद्धसर्वसाधारणसंसारित्वादिरूपफलाबद्धस्यावश्यविविलिंगमकत्वात् एवंचेत् मोक्षभंगप्रसंगः तत्वज्ञस्तुर्निरुद्धत्वादितिवाच्यम् नचयथार्थलिंगादिदर्शनात्वज्ञानादेवतत्संभवात्कथं तद्दर्शनेन तद्वैवकार्यकारणभावकल्पनाच्चनह्येवंनियमः सजातीयादेवकारणात् कार्य्योत्पत्तिरिति कथमन्यथाप्राणिनःशुक्तिजतदर्शनात् प्रवर्तेरन् विच्छिन्नधूमःपवह्निं स्वसन्निकृष्टमेघादिषुतद्याप्तिभ्रमेणानुमन्यमानाः प्रवृत्तिमारूढास्तमनुलभेरन् रज्जौ सर्पभ्रमेण भीतितदनुभावादिकमावहेरन्

स्वप्नकामिनीसंभोगादिनाचहृदयंनिर्वृतिफलमापद्येरन्निति अतएवगौतमसूत्रभाष्येवात्स्यायनः यस्योत्पादाद्यदुत्पद्यतेयस्यचानुत्पादाद्यन्नोत्पद्यतेतत्कारणंकार्य्यमितरदित्येतत्सारूप्यमिति प्रकृतेतुतथा सम्भवात् किंचनित्यमुक्तस्यमोक्षाग्निरपियथाविद्याकीतथातत् कारणमपियथाच जीवस्यतथाभावस्तथाप्रतिपादयिष्यते। अतएव शारीरकभाष्येभगवच्छंकराचार्य्यपादाः तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासंपुरस्कृत्यसर्वेप्रमाणप्रमेय व्यवहारालौकिकावैदिकाश्चप्रवृत्ताः सर्वाणिचशास्त्राणि विधिप्रतिषेधमोक्षपराणीति। अथसंशयोदुःखहेतुर्दुःखञ्चद्विष्टंतेन तन्निवृत्तावेवसर्वेषांवासनेतिकथंद्विष्टसाधनेभवतांप्रवृत्तिरितिचेत्। किंकुर्मोवयंप्रतिभाननिर्वृत्तिमर्हतियेनभवंतद्रूवजाड्येनकिंचिन्निरूप्यसंशयंनिवर्तयामः अतएवदुःखमहार्णवंजगदित्यामनंति शिष्टाःतर्हिअस्मत्पक्षाश्रयणमेवोचितंदुःखाभावादिचेत्भवत्पक्षमुपेक्ष्यनिद्रालंबनमेवाधिकश्रेयः तत्राज्ञानातिशयादधिकदुःखाभा

वस्थापिसम्भवात् किंचभवतामज्ञानेनापि
पांडित्याभिमानो मृषाप्रपंचमभिसृज्ययल्लो
कान्दुःखाकरोति तन्निवृत्तेरेवपरमदया-
लूनामस्माकमिष्टतातेनापिप्रवृत्तिसम्भवात्
एकदुःखापगमायदुःखांतरपातःप्रक्षालना
द्धिपङ्कस्येतिन्यायमाक्षिपतीतिचेत् भवता-
मेवतथापर्य्यनुयोगसम्भवः तथाहिभवद्भिरे
वगुरातथाभिमानस्त्यज्यतांसुतरांतन्निबंध
नासंघायिका दुःखफलिकायुक्तिरप्यस्माकं
सतिमूलेतद्विपाक इतिन्यायमतीत्यनिवर्तेत
जगदपिस्वास्थ्यमावहेतएवंदुःखांतरसम्भवे
वर्तमानदुःखनिवृत्तिसाधनम युक्तमितिनैवं
लोक वृत्तांकिंतुवलवतांनिवृत्त्युपायएवकर्त्त
व्योऽस्तुवोत्तर दुःखपातएवमेवमत्रचहिबलवं
तिखलुदुःखानिभवतामज्ञानातिशयेपिपां-
डित्याभिमाननिबंधनानितन्निवृत्तिरेवफल
मस्माभिरिष्टमितितत्साधनेप्रवृत्तिरितिदुः
खांतरपातसम्भवेहिबलवद्दुःखनिवृत्तेरनि
ष्टतायालोकवृत्तत्वेमाभूत्कंटकेनकंटकापन
यनप्रवृत्तिः नस्यात् क्षुधानिवृत्त्यर्थंपाकाया
सः नजायतांचसंसारनिवृत्त्यर्थंतपश्चर्य्यादि

भिषंगइति । अथाप्तवाक्ये चेद्विश्वास आं
चार्य्या अपि आप्ता इति चेत् कोऽप्यचावच्छेद
कत्वाद्युपदेशेष्वचार्य्यः ब्रह्मावाकपिलोवाक
णादोवाजैमिनिर्वागौतमोवाव्यासोवानह्ये
षामनुशासनेष्ववच्छेदकत्ववात्तापयाम्नायते इ
तरेषांतुवादिसमत्वान्न विश्वासः अतएवया
वत् पर्य्यंतं प्राचीना चार्य्य समुदायानुल्लेखि
तानुभवबाधितावच्छेदकत्वादौप्रमाणंनल
भ्यते तावद्युक्तिलेशपक्षपातिन्यपिनस्वेतसो
वृत्तिरभिधावेदितिअथालमप्रकृतवाग्वितं-
डया प्रकृतं साधयामः तदितरानवच्छिन्नत्व
मित्यचा—भावव्यक्तेस्तदितरावच्छिन्नत्वंना
स्तीति प्रतीतिविशेषसिद्ध विलक्षणाभावव्य
क्तित्वेन निवेशान्नदोषइतिचेत् तदितराव-
च्छिन्नत्वं नास्तीतिज्ञानंविलक्षणमभावंसाध
येत् तर्हि किमपराद्धंघटोनास्तीतिप्रतीत्याये
नसाखगोचरं विलक्षणमभावंसाधयितुं ना
र्हेत् सातुविलक्षणानेयमितितुमनोरथमात्र
म् । इदंपुनर्विचारपथमर्हतियदुच्यतेवादि
भिरवच्छिन्न प्रतियोगिताकत्वादिसम्बन्धेना
भावे प्रतियोगितावच्छेदकादिकमवभासतेत

त्वावच्छिन्नप्रतियोगितावच्छेदकत्त्वादिकं प्रत्य भावंविलक्षणमेवेतिफलवलात् कल्पनीयम् तथाचघटोनास्तीतिबुद्धौयादृशावच्छिन्नप्रति योगिता कत्त्वादिना घटत्वावदेरवगाहनम् नीलघटोनास्तीतिबुद्धौघटत्वादेरवगाहित्वे ऽपिनतादृशसम्बन्धेन किंतुविलक्षणकिंचिद वच्छिन्नप्रतियोगिताकत्त्वादिना अतएवपर स्परसम्बन्धवैवलक्षणकृतः परस्पराभावभेद इतिनकाप्यनुपपत्ति।रिति अचष्टच्छामः यदे कैकप्रतीतौसम्बन्धवैलक्षण्यमङ्गीक्रियतेतत् प्रतीयोगिकृतंवातद्धर्म्मकृतंवातत्संवंधकृतंवा अभावकृतंवादेशकृतंवाकालकृतंवाप्रतीति- कृतंवावक्रादीक्षाकृतंवास्वतः सिद्धं वा,,प्रति योगिकृतत्वे सत्ताविशिष्टसत्तयो रनतिरेके णसत्तानास्तिविशिष्टसत्तानास्तीत्याद्युभयो रैक्यापत्तिर्दुर्वाराअतिरेकेवासविशेषणानां तेनैवाभाववैलक्षण्यसंभवेकिमंतराधिकाव- च्छेदकत्त्वादिकल्पनयाद्वयमेवव्याहतिर्यथासं भवमुत्तरोत्तरमूहनीयेतितद्धर्म्मकृतत्त्वेसम- वायेनघटोनास्तिसंयोगेन घटोनास्तीत्याद्यु -योः सम्बन्धकृतत्वे समवायेनघटोनास्तिसम

वायेन पटोनानास्तीत्यादावुभयोस्वसाध्याप-
त्तिः अभावकृतत्वे तुतत्कृतमभाववैलक्षण्य
मभावकृतं तदित्यन्योन्याश्रयएवपर्य्यवसानं
देशकृतत्वे कालकृतत्वे वाएकदेशकालद्वत्त्य
भावसमुदायानामभेदापत्तिःप्रतीतिकृतत्वे
त्वप्रतीत्यातस्यतेनाभावस्यकल्पनमपेक्ष्यतये
वाभाववैलक्षण्यमङ्गीक्रियतां किमंतरापदा
र्थान्तरकल्पनयाकिंचप्रतीत्यासम्बन्धस्यतेना
भावस्यते नचप्रतीतेर्वैलक्षण्याङ्गीकारे चक्र
कएवविश्रामः इच्छाकृत त्वे चसर्व्व एवस्वेच्छा
तःसर्वानभावानैक्यं एकंवानानात्वङ्गमयेयुः
स्वतः सिद्धत्वे किमभाव एवनस्वतः सिध्येत्
अभावेस्वतः सिद्धत्वं नास्ति सम्बन्धेचास्ती
त्यत्रनियामकाभावः तचयदिस्यादत्रापिस्या
त् अत्रयदिनस्यात् तत्रापिनस्यात् सम्बन्धग
तवैलक्षण्यमभाव वैलक्षण्यसाधकंनत्वभाव
गतन्तदित्यात्राप्रामात्रमुभयो रेवविलक्षणप
दार्थत्वादिति अतएवातिप्रसंगाद्भनापाद-
कयस्मिन्नेवधर्म्मेतादृशसम्बन्धोपजीव्यत्वमङ्गी
क्रियतेनाभाव वैलक्षण्यमास्थेयं तादृशेनेवध
र्म्मेणाभाव वैलक्षण्यं कल्पयतामस्माकं नका

चिदनुपपत्तिरित्यवधेयम् । किंचताहशसंबं
धोयदिकश्चिद्विलक्षणः पदार्थः तथाभावोऽ
पिकश्चित्तेनचेदस्यभेदःतस्याप्यनेनकथंभेदो
नेष्यतांसचेद्विलक्षणःकिमयंनतथेत्यत्रविनि
गमकाभावः कथ्यतां जगतिकएवंपदार्थो।व
र्ततेयंस्वतःसिद्धवैलक्षण्यं नविलक्ष्यणांकुर्य्या
च्चेतरवैलक्षण्यं तथाअतएवत्यज्यतामप्रवेश्ये
नप्रविष्टाभिमानितादुरवगाहंखल्वचिंत्यर-
चनंजगतांतत्त्वमिति । अथापरेप्रत्यवतिष्ठं
तेनाभाव प्रतीतावितरानवछिन्नावाताहश
विलक्षणावासम्बन्धः प्रतियोगिता परंतुप-
र्य्याप्तिघटितैवसातथाहि घटोनास्तीतिप्रती
तिविषयाभावस्यप्रतियोगीघटः तच्चप्रतियो
गितातदवछेदकंघटत्वं तचावछेदकतासाच
घटाभावीयप्रतियोगिता वछेदकताघटत्वप
र्य्याप्ते तिप्रत्ययात् ताहशावच्छेदकतायाःप-
र्य्याप्तग्राख्यः कश्चिद्विलक्षणः सम्बन्धः तस्यप्र
तियोगिअवछेदकत्व मनुयोगिघटत्वं तस्यप्र
तियोगितायाः अवछेदकंताहशावछेदकता
त्वमनुयोगितायाअघटत्त्वहत्त्व - त्वं एवंनी
लघटोनास्ती त्यचप्रतियोगिता वछेदकत्वं-

नीलत्वघटत्वोभयपर्य्याप्तमितिप्रत्ययात् अव
च्छेदकतायाः पर्य्याप्तेरनुयोगितावच्छेदकंनी
लत्वघटत्वद्वित्वं एवंयथासंभवंत्रित्वचतु
ष्टयत्वादिकंविज्ञेयंतथाचघटोनास्तीत्यत्रस्व
वृत्तितदेकत्वावच्छिन्नानुयोगिताकपर्य्याप्ति
प्रतियोग्यवच्छेदकताकप्रतियोगितासम्बन्धे
नघटत्वस्यतदेकत्वावच्छिन्नानुयोगिताकप
र्य्याप्तिप्रतियोग्यवच्छेदकताकप्रतियोगितास
म्बन्धेनघटस्यवाभावेनीलघटोनास्तीत्यत्रनी
लत्वघटत्ववृत्तिद्वित्वावच्छिन्नानुयोगिताकप
र्य्याप्तिप्रतियोग्यवच्छेदकताकप्रतियोगितासं
बंधेना भावेनीलघटस्यान्वयोपगमात् नका
श्चिदनुपपत्तिर्नापत्तिर्वासंबंधवैलक्षण्यादि-
तिचेत् यत् प्रतीतिविशेषादेकत्वद्वित्वादिक
मनुयोगितावच्छेदकंतादृशप्रतीतिविशेषवि
शेषत्वं किंस्वतः सिद्धं इतरप्रयुक्तं वास्वतः
सिद्धत्वे घटोनास्तीति प्रतीतिविशेषेणैवघ
टाभावस्यवैलक्षण्यमङ्गीक्रियतांकिमंतरवच्छे
दकत्वंपर्य्याप्तमितिप्रतीतिविशेषं प्रकल्प्यते
नकल्पितानुयोगितावच्छेदकैकत्वादिभिर
भाववैलक्षण्य कल्पनेनसातु विलक्षणानेय-

मितितुमनोरथमात्रं द्वयोरेवप्रतीत्योःपरस्प
रवैलक्षण्येनावभासनात् किंचतथापिघटो
नास्ति नीलघटोनास्तीत्यनयोरैक्यापत्तिः।
नीलत्वावृत्ति नीलघटाभावीयप्रतियोगिता
वच्छेदकत्त्वस्यघटत्वमात्रेसत्वे नतादृशावच्छेद
कत्वकूटत्वपर्य्याप्तिमितिप्रतीतेरबाधात्नील
घटाभावीयघटत्ववृत्तिप्रतियोगितावच्छेदक-
त्त्वपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य घटत्ववृ-
त्त्येकत्त्वेसत्त्वेन तादृशैकत्त्वावच्छिन्नानुयो-
गिताकपर्य्याप्तिकावच्छेदकताकप्रतियोगिता
कत्त्वस्यनीलघटाभावेऽपिसत्त्वात् अथघटो-
नास्तीत्यत्र घटत्ववृत्तियदेकत्त्वंतादृशैकत्त्ववृ
त्ति प्रतियोगितानिरूपकत्त्वे नघटाभावस्य
वैलक्षण्यमंगीकार्य्यं एकत्ववृत्तित्वञ्चप्रतियो
गितायाःस्वावच्छेदकतात्वावच्छिन्नप्रतियोगि
ताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसंबंधेनत-
थाचनीलघटोनास्तीत्यत्रप्रागुक्तप्रत्ययबलात्
घटत्ववृत्त्येकत्त्वस्यतादृशावच्छेदकतापर्य्या
प्त्यनुतनुयोगितावच्छेदकत्त्वेऽपिनतत्रनील
घटाभावीयप्रयोगितायाःस्वावच्छेदकतात्वा
वच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छे

दकत्त्वन्नीलत्वाद्यवृत्तिघटत्ववृत्तितादृशावच्छे-
दकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनु-
योगितावच्छेदकत्त्वमिति नीलत्त्वाद्यवृत्तित्त्व
स्य पर्य्याप्तिप्रतियोगितावच्छेदकत्वावधिक-
स्यावगाहनात्तयोर्वैलक्षण्यं सुवचमिति चे
न्नतथाप्येकत्त्वेतादृशावच्छेदकतात्त्वावच्छिन्न
पर्य्याप्त्यनुयोगितावच्छेदकत्वस्याक्षतत्त्वात्
तद्वारणायपर्य्याप्तिप्रतियोगियोगितायामि
तरानवच्छिन्नत्वनिवेशेपूर्वोक्ताएवदोषाःपुन
र्जागरणमर्हेयुः तत्रापिपर्य्याप्तिनिवेशेएतए
वदोषाःसम्भवेयुः यदिचतद्वारणायपर्य्याप्ति
प्रतियोगितायाघटाभावीयप्रतियोगितावच्छे
दकतात्ववृत्त्येकत्ववृत्तित्वंतच्चतस्याः स्वाव
च्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनु
योगितावच्छेदकत्वसम्बन्धेनग्राह्यमितितथा
पिनीलत्वाद्यवृत्तित्वा वृत्तिपर्य्याप्ति प्रतियोगि
तावच्छेदकत्वं तादृशावच्छेदकतात्त्वपर्य्या
प्तिमितप्रत्ययात् तादृशावच्छेदकतात्व वृत्त्ये
कत्वस्यापितादृशपर्य्याप्त्यनुयोगितावच्छेदक
त्वेन पुनस्तद्दोषतादवस्थ्यं तद्वारणायतत्रा-
पिपर्य्याप्तिनिवेशेतादृशपर्य्याप्तेरपितयासम्ब

वेनतच्चापितथातच्चापितथेत्यनवस्थायामेव-पर्य्यवसानंकुचाचिद्गत्वास्वतोवैलक्षण्येप्रतियोगितायाश्चभावस्यप्रतीतेर्वा तथासंभवेनव्यर्थः पुनर्महिषपानीयपानन्यायसमाक्षेपः। नचवाच्यंनीलत्वावृत्तिनीलघटाभावीय प्रतियोगितावच्छेदकतायाः पर्य्याप्तिप्रतियोगितावच्छेदकंतादृशावच्छेदकतावृत्तितद्व्यक्तित्वंघटोनास्तीत्यत्रतादृशपर्य्याप्तिप्रतियोगितावच्छेदकतादृशावच्छेदकतात्वमितिउभयत्रैवैकस्याएवावच्छेदकतायाः पर्य्याप्तिप्रतियोगित्वेनात्रतद्व्यक्तित्व मत्रावच्छेदकत्वमवच्छेदकमित्यत्रविनिगमकाभावात् प्रतीतिवैलक्षण्यानुरोधेनतथास्वीकारेप्रतीतेरेवतथास्वीक्रियतांकिमनुभवविरुद्धपदार्थान्तरकल्पनेनलाघवानुरोधिनांभवतांकिंचप्रतीतिवैलक्षण्यकृतंतदित्यङ्गीकारेप्रतीतिवैलक्षण्यकृतं तत्तत्कृतंप्रतीतिवैलक्षण्यमित्यन्योऽन्याश्रयएवपर्य्यवसानंएवंतद्वैलक्षण्यप्रयोजकम् यदिप्रतीतिवैलक्षण्यं तदासिद्धादेव प्रतीतिवैलक्षण्यादभाववैलक्षण्यसम्भवेतादृशपदार्थान्तरकल्पनाया अप्रामाणिकत्वात् एते-

नघटोनास्तीतिप्रतीतिसिद्धाभावीयप्रतियो
गितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकप
र्य्याप्त्यनुयोगितावच्छेदकं यदेकत्वंततोविल-
क्षणमेवनीलघटोनास्तीत्यभावीयनीलत्वादि
त्तिघटत्वद्वित्त्वावच्छेदकतापर्य्याप्त्यनुयोगिताव
च्छेदकमेकत्वंकल्प्यमतोतिवैलक्षण्यायेति-
वर्णयतांमतमप्यपास्तं पूर्वोक्तदोषेणनियाम
काभावेनच किञ्च नीलघटपटोभयंनास्ति
नीलघटोनास्तीत्यादौउभयत्वादिवृत्तित्वेसति
घटत्वादिवृत्तिताद्यप्रतियोगितावच्छेदकत्वयो
रेकव्यक्तित्वाभावेन तद्व्यक्तित्वरूपपर्य्याप्तिप्र-
तियोगितावच्छेदकत्वाभावात् तयोरैक्यापा
त्तेर्दुर्निवारत्वात् तत्राप्यन्यतरत्वादेस्तथा-
कल्पनेनीलघटोनास्तीत्यत्रापितथासम्भवात्
प्रतीत्यनुरोधेन तथात्वेचपूर्वोक्तदोषावका-
शादिति ।
अथालमोत्ययनिवेशनघटोनास्ति नीलघटो-
नास्तीत्यनयोः स्वस्वभावप्रतिबिद्धघटत्वादि
वृत्तिसंख्या विशेषस्वभावप्रतिबिद्धत्वे नप्रति
योगितासम्भावं वाविशेष्यनिर्वचनेनैकताप्र
त्तिः स्वभावप्रतिबिद्धत्वं चसंख्यायाः पर्य्या

त्यादिनाप्रतियोगित्वादेः स्वनिरूपितावच्छेदकत्वादिनाएतेननीलघटोनास्तीत्यत्रप्रतियोगितावच्छेदकताया विरुद्धधर्म्मद्वयस्यैकत्राव्यासज्यसंभवेनैकत्वासंभावनायां द्वित्वेनांगीकारेपर्य्याप्तेरव्यासज्यवृत्तेरनुयोगितायाम् व्यासज्यवृत्तेरवच्छेदकताया अप्रामाणिकत्वस्याप्रामाणिकत्वेनाव्यासज्यवृत्तेस्तथात्वेसिद्धे घटत्ववृत्तेश्कत्वादिवृत्तिप्रतियोगितावत्त्वादिना ऽभाववैलक्षण्यकल्पने ऽपिघटोनास्तिनीलघटोनास्तीत्यनयोरैक्यापत्तिर्दुर्वारेत्यप्यपास्तमितिचेन्नयत् स्वभावप्रतिविद्धत्वन्तत् किंस्वात्यन्ताभावेनस्वाश्रयान्योऽन्याभावेन स्वनिष्ठात्यन्ताभावाप्रतियोगित्वेनस्वनिष्ठान्योऽन्याभावप्रतियोगितानवच्छेदकत्वादिनावाघटितंसर्वंचैवाभावघटितत्वे न विशिष्टोभयाभावादेर्दुर्निवार्य्यत्वेनैकवृगद्दोषप्रसमनकामिनांलयनान्तरनाम्न्यायाद्येपातात्तत्रापिपूर्वोक्तप्रकारादरेपूर्वोक्तदोषसमुदायावकाशात्अस्यादरेतत्राप्येतज्जिज्ञासासम्भवात्तस्याविषयासिद्धावनिवृत्तेःसिद्धौचतस्यतत्रापिपुनर्जिज्ञासोदयात्अनिष्ट-

त्तावनिरूपणात् निवृत्तौचपुनस्तद्विषयेतथा संभवेनानिरूपणे वानवस्थायांवापर्य्यवसा- नाच्चकिंचतद्घटकीभूतव्यक्ति विशेषाधिकर णतायांसम्बन्धविशेषावछिन्नत्वस्यनिवेशाव श्यकत्त्वेनतदन्वयपर्य्यवसानायनिरूपकत्त्ववि शेषस्यनिवेशेतस्याधिकरणतायामन्यथानु- पपत्त्याऽन्वयस्यकल्पनीय तयातस्याअपिवै- शिष्ट्यस्यधर्म्मिणिनिवेशस्यावश्यकत्त्वे यथाक थञ्चित्सम्बन्धेनतन्निवेशेपुनर्व्यभिचारसम्भा वनायांसम्बन्धविशेषेणतद्वत्ताङ्गीकारेपूर्वोक्त रीत्यातदन्वयादिपर्य्यवसानायपुनर्निरूपक त्त्वादिनिवेशेपुनस्तत्रापि तथासम्बवेनतथा सम्भवधारायामनवस्थायांपर्य्यवसानात् क्व चिद्गत्त्वाविश्रामेऽनन्वयएवविश्रामादिति अनेनैवाश्रयमारणमंत्रेणनिराश्रयाआश्रय मन्तरेणस्थातुमसमर्थाः पर्य्यटन्तुदुरर्थांदु- रभिमानिनामिति ॥

इदमपिविचार्य्यं पुनर्यदवच्छेदकत्त्वादिक मङ्गीक्रियते तत्किंस्वरूपंद्रव्यादीनांद्रव्य- रूपत्वे द्रव्यमात्रवृत्तित्त्वेनगुणरूपत्वेक्रियारू त्वे वातथैवस्थित्यासामान्यरूपत्वेद्रव्यादिचि

कवृत्तित्वेनसमवायरूपत्वेद्रव्यादिचिकवृत्ति-
त्वे नविशेषरूपत्वे तत्प॰ माणुचिकवृत्तित्वे
नचावच्छेदकत्वादीनांसमुदायासत्त्वप्रसंगा-
त् केवलान्वयित्वासम्भवेनसिद्धान्तव्याघातः
नचवाच्यमभावरूपंतत् नैयायिकनयेऽभा-
वस्यालीकत्वात् तथाहिगौतमसूत्रभाष्ये अ
स्त्यन्यदपि द्रव्यगुणकर्म्मसामान्यविशेषसम-
वायाः प्रमेयमित्यादिकणादसूत्रंचधर्म्मविशे
ष सूताद् द्रव्यगुणकर्म्मसामान्यविशेष सम
वायानां षण्णामेवपदार्थानांतत्वज्ञानान्निः
श्रे य साधि गम इति सांख्यसूत्र नवयंवैशेषि
कादिवत् षट्पदार्थवादिन इति च अथास्तु
वातस्याभावरूपत्वंप्रागभावरूत्वे ध्वंसरूपत्वे
वातथैवसर्वचासत्व प्रसंगस्यातिप्रसंगस्यअ-
त्यन्ताभावरूपत्व त्ववश्यं गगना भावादीनां
कस्चिदन्यतमोवाच्यः अन्यथातथैवसर्वचास
त्त्वप्रसंगः तथात्वे चाति प्रसंगइतिकिंचतद
भ्युपगमेयदभावरूपावच्छेदकता प्रयुक्तमभा-
वानांवैलक्षण्यं तदभावस्यापितदभावरूपाव
च्छेदकतायावैलक्षण्यप्रयोजकत्वआत्माश्रयए
वपर्य्यवसानंअभावांतरेणचेत् येनाभावेना

भावस्यवैलक्षण्यंतदभावस्यकेनतद्भावस्यके
नेतिजिज्ञासायामनवस्थायांपर्य्यवसानंकिं
चिन्नत्वाकस्यचित् स्वतोवैलक्षण्यांगीकारे
प्रथमतएवतथा स्वीयतांकिमायास भरेणा
त्माकलुषीक्रियतेजगद्वामोच्यते । अथप्रति
योगितावच्छेदकादिरूपमेवावच्छेदकत्वादिक
मितिचेत् किंघटत्वादेर्नीमांतरत्वे नघटा-
भावादेः प्रतियोगितावच्छेदकत्वादिकमिच्छ
तसाधुभोःसाधुघटत्वादिकमादायैववाग्व्य-
वहारः क्रियतांकिमलीकजालनिक्षेपेणलो
कान् वञ्चयथस्वशरणापन्नान् नखल्ववच्छेद
कत्वादीनांकाव्यवत्रसालंकारादिमत्त्वे न-
किमपिलोकोत्तरचमत्कारोपजीव्यत्वमस्ति
येनसादरमास्वादयामोवयम् किंचावच्छेद-
कत्वादीनांघटत्वादेर्नामांतरत्वे यादवदुक्तं
भवतिघटत्वछिन्नतावदुच्यतेऽवच्छेदकत्वमिति
अपिचावच्छेदकतावद्घटत्वमित्याधाराधेय
भावानुपपत्तिरभेदेतथानंगीताराात् अन्य
थाऽयंघटइत्यादाविदंत्वघटत्वादितात् पर्य
विषयीभूतघटादिप्रतिपत्त्यावयं घटवानिति
प्रत्ययापत्तिर्दुर्वाराएतेनावच्छेदकत्वघटत्वा

देरभेदेऽपिअवच्छेदकत्वत्वघटत्वत्वादीनामति
रिक्तत्वमित्याधाराधेयभावाद्यनुपपत्तिरिति
परास्तं इदंत्वादिना घटादावपि घटवैशि-
ष्ट्यापत्तेर्दुर्वारत्वाच्च घटत्वावच्छेदकत्वादेर
भेदप्रतीतेश्चेति अतएवश्रुतिस्मृतिपुराणा-
दिकोषकाव्यादिदेशतः व्यवहृत्यकथांसाध्वीं
चेतोरंजयताधुना। व्यर्थविश्रांतवाक्यैर्नक
लुषीक्रियतांमनः। नवंचयतशिष्याणांमनां
सिशरणैषिणाम् मास्त्ववच्छेदकत्वादिकंघट
त्वादिरूपंकिंत्वतिरिक्तमेवेतिपूर्वोक्तदोषभि
यानचशक्यतेवक्तुं तथैवावच्छेदकत्वत्वादाव
पिकिंचास्यैकत्वे गगनाद्यभाववद्व्यावर्तक-
त्वात् अनेकत्वेपूर्वोक्तदोषावकाशात् पुन-
रपि पृच्छामः यदवच्छेदकत्वादिकमङ्गीकृ
त्याभाववैलक्षण्यंसाध्यते तद्विलक्षणस्वभता
विलक्षणस्यभावोभयात्मकस्यकिंवोदासी
नस्य विलक्षणस्यवैलक्षण्यमितरेणसाध्येत
चेत् नीलस्यापिवैलक्षण्यंपीतेनाङ्गीक्रियतां
नहिकश्चिन्नीलवैलक्षण्यंपीतकृतमभ्युपैति-
विलक्षणस्यावच्छेदकत्वत्त्वेनवैलक्षण्ये तस्या
प्यनेवैलक्षण्यंकथंनेष्यतेविनिगमकाभावात्

दृष्टापत्तावन्योऽन्याश्रयएवपर्य्यवसानात् स्व
तोवैलक्षण्यासम्भवेनविलक्षणरूपवितर्कवि
षयीभूतधर्म्यसिद्धेः पदार्थानांसर्वेषांपरस्परा
पेक्षित्वेनमहाचक्रकएवपर्य्यवसानाच्चनद्वि
तीयःअविलक्षणस्वैलक्षण्यं यद्यंगीक्रियेत
तर्ह्यभिन्नस्यैवोपाधिकृतभेदस्वीकारेणाद्वैत
वादिनएवविजयेरन् तेषामिवाज्ञानिकमव
च्छेदकत्वादिकंमन्येत चेत्तर्हित्यज्यतामावि
द्यिकस्यपारमार्थिकसत्त्वांगीकरणं नह्यज्ञा
नंकिमपिसाधयेद्बाधयेद्वा अन्यथाशुक्तिरपि
रजतत्वेनसाध्यतांत्यज्यतांचात्मनोविभुत्वा
भिमानःइदंरजतमहंगौरइति प्रत्ययाभ्यां
अतएवन तृतीयः उभयस्यासिद्धेः अनुभव
विरोधाच्चनचतुर्थःविलक्षणाविलक्षणाभ्यां
नकिंचदृश्यते भवतांराद्धांते यदौदासीन्य-
नाङ्गीकर्त्तुंशक्यते स्वीकारेच किमपराद्धं भ
वतांनयेसदसद्विलक्षणयामायया स्वीकारेच
यदौदासीन्यन्तत्रपूर्ववद्विकल्पे तद्दोषतादव
स्थ्यात् तद्धारास्वीकारेत्वनवस्थायां वापर्य्य
वसानात्कुत्रचिद्गत्वाविश्रामेमूलपर्य्यंतंनि-
पतनमर्हत् तदुत्तरंकिमिति नजानीमोव-

यमित्याख्या नेत्वनिर्वाच्यवादएवास्थीयताम् इयमपिवितण्डेतिचेन्नवितण्डाया अनपवा-र्य्यत्वस्योक्तत्वात्। किंचसंत्यज्येतसायदिवितण्डामन्तरेणकथान्तरमसज्येतनचास्ति-तथायदाश्रयामः सुतरामेवप्रतिभासंपन्नानांवाग्विलासिनांतदाश्रयणंमौनंवाशरणम् अस्त्यपरापिकथावादोजल्पश्च याभ्यामासं-सारंप्रवर्तमानाःशिष्टतामुपपादयंत्यात्मनांशास्त्रिणः अधुनावैतंडिकत्वेनतावनभिमन्यमानानांस्वाच्छन्द्यमाश्रयितुंप्रयत्नोऽयम् भवताम् किमित्याक्षिप्यते त्यज्यतामाक्षेपः श्रोष्यामः कापरेतिसा।

अथोच्यते किंप्रमाणतर्कसाधनोपालंभः सिद्धांताविरोधीपंचावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहोवादः यथोक्तोपपन्नछलजाति-निग्रहस्थानसाधनोपालंभोजल्पइतिकथांतरसुभयं। सत्यमेतत् संभावयामः स्याद्यदिकश्चित् सिद्धांतः सचदुर्लभः केनतमिच्छततर्केणप्रमाणेनानुभवेन वाऽऽद्योऽनवस्थान-मित्युक्तं द्वितीयेयदिकिंचित् सिध्येत् खलुप्रमाणन्तह्यास्थातव्यः सः। तदेवासिद्धंविष

यसाधनेप्रवर्तमानंस्वयमसिद्धः कथंपरान-
नुसाधयेदित्याद्येपंभजतेयथादुर्लभातत सि
द्धिस्तथाप्रतिपादयिष्यामः प्रमाणखंडनप्रक
करणे । द्वितीयेनकश्चिदस्तिनियतैकविषय-
कसर्वानुभवः यएकंसर्वानुमत मर्थंसाधयेत्
इतिनहिशक्यतेवक्तुं एकस्यप्रमाणिकः नत
थापरस्यस्वस्वोपदेशो पजीवकसंस्काराभ्या
सदृढीकृतार्थ समुदायानुसारिभिः परस्परं
स्वसिद्धांत रक्षणायकलहायमानैर्वाग् व्यव
हारिसमुदायैः सर्वएवविरुद्धार्थाः प्रामाणि
कत्वेनसाधयितुमारब्धानिश्चिष्यंत एवाप्रा-
माणिकत्वरूपापारपारावारमध्येनहिकश्चि
त्कस्यचिदधीनःयएकानुमतमनुमन्येतनको
देरनवस्थानेनतेनानुमानयितुमशक्यत्वात्
किंचसतिसिद्धांतेसप्रतिपक्षस्थापनाहीनोवि
तंडेत्यस्यानवसरप्रसंगोदुर्निवारःस्यात्। प्र
तिपक्षशून्यस्यतथेतिचेत्प्रतिभावंतोभवंतोभ
वदाचार्य्यावाभवंतिवंद्यतेऽस्माभिः सिद्धांतः
स्थाप्यतांसः अन्यथामौनमास्थीयतामिति ।
अतएवयेकेचिदिहसंसारेसर्वेक्षाइतिस्थि
रं। नकोऽपितत्त्वतोवेत्तिकिंतत्त्वंपरमार्थतः

मलिनान् वुद्धिसंस्कारान् मलिनैर्जनितान् किल । विहायालंव्यतांभजन्भवे निस्तारकारिणी । अथवालंव्यशब्दादिसाधनंवुद्धिवैभवं सुखान्यादायचरतयेनात्मासंप्रसीदति । प्रतारकानांवाक्येनप्रतारितधियः कथंइतोऽष्टास्ततोनष्टास्त्रिशंकुसमवर्त्तनाः । यदाप्रयुज्यतेशब्दस्तदाज्ञानंप्रजायते । अचेवंनैवमचास्तेव्यर्थवाग्विस्तरैरलम् ॥ येतत्रानैवजानंतिव्यवहारोनजायाते । किंतेषांरीतिरेषैवयथात्थषिस्तथोदयः । अथावच्छेदकत्वाद्यनंगीकारेविशिष्टबुद्धिरेवनोपपद्यते तथाहिघटोनास्तीत्यत्र यद्यवच्छिन्नप्रतियोगिताकत्त्वरूत्वन्वे नघटत्वस्यवैशिष्ट्य मनंगीकृत्याभावेघटस्तस्मिन् घटत्वमित्यवगाह्ये ततर्हिप्रमायांकथंचिदेवं संभवेऽपिघटत्वे न घटाभावावगाहिनिश्चमेताद्दशभानासम्भवेनतस्यविशिष्टबुद्धित्वानुपपत्तिः तथाचोच्यतामधुनावच्छेदकत्वानंगीकारिभिवैतंडिकैः कीदृशः पुनर्भ्रमेविशिष्टबोधतेतिचेन्न ताद्दशविशिष्टबुद्धेरनभ्युपगमात् अस्माकंतुघटोनास्तीतिप्रमायांघटत्वस्य समवायस्यघटस्यसंयोगस्यअभा

वत्वस्यस्वरूपस्यअभावस्यचन्नमेतुघटमपहा
यपटस्यतादृशसमुदायस्य चावगाहनेनभ्रम
प्रमानिर्वाहात्। यदिच विषयविशेषावगाह
नेतयो: सर्वानुभवसिद्धं समानाकारत्वं व्याह
तमितितथापिसमाना कारकत्वस्यकोऽर्थ:
किंसमानशब्दप्रतिपाद्यत्वं उतसमानविषय
कत्वं किंवासमानरूपेणावगाहित्वम् आद्यो
अभिन्नत्वं आद्येत्युक्तमेवतत् उभयचैवस
मानशब्दप्रयोगात्द्वितीयेघटपटरूपविषयवै
लक्षण्ये नभवतामेवालक्ष्यत्वं तृतीयेदृष्टाप
त्ति:इयोरेवघटत्वे नावगाहनात् चतुर्थेदूरे
स्तुभ्रमप्रमयोर्वार्ताप्रमाणामपिप्रतिव्यक्ति
भिन्नत्वे नसमानाकारकत्वंदुर्लभम् नचस
मानरूपेणेत्यत्रसमानरूपावच्छिन्नत्वं तृतीया
र्थस्त्वयाप्यङ्गीक्रियते तथाचतृतीयार्थत्वे ना
वच्छिन्नत्वसिद्धौतस्या वच्छेदकतानिरूपकार्थ-
त्वे नावच्छेदकत्वसिद्धिरप्रत्यूहै वेतिवाच्यंत-
स्यजटाभिरक्षा।चइतिवद्विशेषणार्थत्वात्यदि
चविशेषणंतत्रतद्दत्वं भ्रमेनसंभवति तथापि
तदुपाय: प्रतिपादयिष्यते यथातृतीयार्थोना
वच्छेदकत्वं साधयेत् किञ्च नह्येवंनियमस्त

द्रव्यस्यविशेषणत्वं कथमन्यथा पीतः शङ्खः नीलं जलं रक्तं तेज इत्यादयः प्रयोगाः। अथघटोनास्तिघटोभावइत्यनयोः साम्यापत्तिरितिचेत् द्वितीयेनामार्थे योभेदान्वयस्याव्युत् पन्नत्व नाधिकस्य तादात्मस्यावगाहनात् तयोर्वैलक्षण्यमितिविचार्य्यमेत दत्रपुनःयद्विशिष्टवैशिष्ट्यावगाहिवोधान्तरोधेनावछेदकत्वंसाध्यते सघटोनास्तीति वाक्याज्जायतांकिमवच्छेदकत्वादिभावशेनयदि चघटोनास्तीति वाक्यात्कश्चिदर्थोनावगम्यते तर्हि अवछिन्नप्रतियोगिताकत्व संबंधेन घटत्वनिष्ठप्रकारता निरूपिताभावत्वावछिन्नविशेष्यताकत्वरूपवाक्यात्कथमवगम्यतेउभयोरेववाक्यत्वात् यदिचघटोनास्तीतिवाक्यार्थावगमायतादृशवाक्यांतरप्रयोगःतर्हि तदर्थावगमाय नवीक्यांतरं तदर्थावगमाय च तथेत्यनवस्थायामेवपर्य्यवसानंकस्मिंश्चिद् गत्वाविश्रामेतदर्थावगमासंभवेन दृष्टमिष्टवतो मूलपर्य्यंतनाशप्रसंगोदुर्वारःनचवाच्यंतत्रयादृशार्थोवर्त्तते तस्यवोधक इतिघटोनास्तीति वाक्यस्यानर्थक्यापत्तेः घटोनास्तीति

नाक्यात्प्रतीयेतचेत् भवदुक्तवाक्यस्यतथा-
त्वापत्ते रुभयोरेवतद्बोधकत्वेएकोक्ते र्निष्प्र
योजकत्वापत्तेः अधिकोक्तिर्दोस्यायेतिचेत्पु
नरपिकिंचिदधिकमुच्यतां येनातितमदाध्यं
स्यात्किंचताहृशवाक्यात् घटोनास्तीतिवा
क्यप्रतिपाद्यस्यार्थस्यवोद्धुमशक्यत्वात् शब्दा
र्थयोर्विभिन्नत्वात् नवयंब्रूमः ताहृशवाक्या
त् घटोनास्तीतिवाक्यार्थोवगम्यतेकिंतुघटो-
नास्तीतिवाक्यात्प्रतिपत्तौताहृशार्थोवर्त्तत
इतिचेत् केनज्ञायते प्रत्यक्षात्शब्दात् अनु
मानाद्वानाद्यःप्रत्यक्षन्तावत् लौकिकमलौ-
किकंवालौकिकत्वे सर्वेषामेवेंद्रिय सन्निपात
मात्रेण साक्षात्कारापत्तिःनह्ये वंकिंचिल्लौ
किकसाक्षात् कारविषयंवर्त्ततेयत्सर्वेंद्रिं-
यसंनिपातमात्रेणनसाक्षात्कुर्वंति पृच्छ्यतां
तावदापामरं यदिकश्चित् घटोनास्तीतिप्र
तीतौताहृश मवलोकितदृष्टापियूयं वैतंडिक
त्वेननकथयतेतिचेत् अदृष्टापियूयंमोहेनक
थयतेतिवयमपिवक्तुं शक्नुमः किंचताहृशवि
शेष्यताकत्वस्यात्मविशेषगुणत्वाभावेनमान
ससाक्षात्कारासम्भवःज्ञानांतर्भावेणनवहि

रिन्द्रियग्राह्यतानुपपत्तिस्त्वकथयत तावदस्मां
तरंबाह्यंवाप्रत्यक्षंयेनगृह्येत । अलौकिक
त्वेतत्साधकप्रमाणवक्तव्यतापत्तिः । प्रतीति
वैलक्षण्यमेवतत्साधकमितिचेत् प्रतीति-
रेवकुतोवैलक्षण्यमितिवक्तव्यंविषयेण वैल-
क्षण्येत्वस्माकमपितथास्त्वतोवैलक्षण्येऽभि
तिब्रूमः । तेनैववैलक्षण्येतद्वैलक्षण्यसाधि
काप्रतीतिः प्रतीतिवैलक्षण्यसाधकन्तदित्य
न्योऽन्याश्रयएवपर्य्यवसानात् नद्वितीयः त
द्बोधकशब्दाभावात् घटोनास्तीतिवाक्यात्
तद्बोधाङ्गीकारेसकृदुच्चरितःशब्दः सकृद-
र्थङ्गमयतीतिन्यायात्घटाभावबोधनेपर्य्य
वसन्नस्यतादृशविशेष्यताकत्वबोधासम्भवात्
युष्माकमालङ्कारिकवत् व्यञ्जनावृत्तेरनङ्गी
कारात् अङ्गीकारेऽपिअनवस्थायामेवपर्य्य
वसानात् तथाहिघटोनास्तीतिवाक्यजन्य-
बोधवैलक्षण्यायतच्च यदितादृशविशेष्यताक
त्वस्वीकारः तद्वैलक्षण्यायापितच्च तथात-
च्चतथेतिजिज्ञासोदयात् किञ्चिद्गत्वाविश्रा-
मेपुनर्मैषपतनन्यायाक्षेपप्रसङ्गाच्च । नतृती
यः गमकाभावात् गमकस्यलौकिकत्वे स-

वैषाम्यत्वसम्भवात् तस्यानुपपत्तत्वात्
अलौकिकत्वेतत्रापिप्रमाणजिज्ञासोदयात्
अस्तुवानुमानम् यद्वैलक्षण्यानुरोधाययस्या
नुमानमाश्रीयते तद्विलक्षणमविलक्षणंवा वै
लक्षण्यतद्वैलक्षण्यप्रयोजकन्तद्बोधेऽपिकि
ञ्चिद्वैलक्षण्यंवाच्यन्तद्बोधेऽपि तथातद्बो
धेऽपितथेत्यनवस्थायांपर्य्यवसानात् किञ्चि
द्गत्वाविश्रामेतथादोषावकाशात् अतएवन
द्वितीयः अविलक्षणस्यवैलक्षण्याप्रयोजक-
त्वात्। अथक्वचिदेवधर्म्मिणिकिंचद्भासतेप्र
तीतावितिसर्वेषामनुभवस्तदपलापेभवताम
पलापएवसुतरामितिचेत् सत्रीर्थस्यतथावि
कल्पेतथैवदोषावकाशात्। किंचघटवद्भूतल
मित्यादौ घटत्वस्यसमवायस्य घटस्यसंयोग
स्यअधिकरणत्वस्यस्वरूपस्याधिकरणस्याव
गाहनमिच्छथः उतकिमप्यनदधिकंआद्ये-
ष्टापत्तिः द्वितीयेऽधिकस्यवक्तव्यतापातःय
थाभवद्भिरिष्टापत्तिः क्रियतेनतथापरंतुघटे
घटत्वं समवायेन भासतइतिचेदस्यकोऽर्थः
किंघटनिरूपितसमवायसम्बंधा वच्छिन्नघटि
त्वंघटत्वेउतसमवाय संबंधावच्छिन्नघट

निरूपिताधि करणत्वं घटेऽभयतथैव वृत्ति-
त्वाधिकरणत्वयोरभेदे घटघटत्वयोरेवभाने
पर्य्यवसानंभिन्नत्वे सिद्धांतव्याघातः किंच-
निरवच्छेदकयोर्वृत्तित्वाधिकरणत्वयोर्भव
न्मतेऽसंभवः अस्तुवाभिन्नत्वेमेतयोः तयोः
क्वचावभासनन्तचवाकस्यांतराभासमानयोः
तयोः क्वचिदनवभासनेतयोश्चकस्यांतराभा
समानयोस्तथैवानुभवापलापः अवभासनेचा
धिकरणत्वेनवृत्तित्वेनवातन्नतथाजिज्ञासा-
यांक्रमिकावभासनेष्वनवस्थायां पर्य्यवसानं
नावभासनेतथैवानुभवापलापोदुर्वारः अतः
शिरोवेष्टननासिकास्पर्शन्यायानुधावनमन
र्थकमेव । पुनरपिपृच्छामःयत्संयोगेनभूतले
घटस्यावगाहित्वन्तस्यकोऽर्थः किंसंयोगेनघ-
टाधिकरणत्वं उतभूतलनिरूपितसंयोगसम्ब
न्धावच्छिन्नवृत्तित्ववत्वं यदस्तुतादृशाधिकर-
णत्ववृत्तित्वयोर्भूतलघटाभ्यांकोदृगत्वयः अ
भेदेनचेत्तयोर्भेदे विरोधः अभेदे चतत्रैवपर्य्य
वसानंतयोरपिवृत्तित्वे नाधिकरणत्वे नवां-
गीकारेतादृशाधिकरणत्व वृत्तित्वयोः सम्ब
न्धजिज्ञासायांसम्बन्धविशेषावच्छिन्नत्वनिवे-

शेतयोरपिभेदेनाभेदेनवापुनर्जिज्ञासायांत
थैवनिवेशोऽनवस्थायामेवपर्य्यवसानंकुत्रचि
ज्ज्ञत्वावैशिष्टानंगीकारेणवाक्यार्थस्वीकारेप्र
थमएवतथास्वीकार्य्यं किंशिरोवेष्टन नासि
कास्पर्शन्यायानुसरणेनमास्तुविशिष्टबुद्धिःप्र
त्येकमवगाह्यज्ञानद्वैलक्षण्याङ्गीकारेऽपिक
थम्भवति प्रतिबध्यप्रतिबन्धकभावः प्रतियो
ग्यभावबुद्ध्योः यदिभूतलेघटोनास्तीतिबुद्धिः
भूतलत्वसमवायभूतलघटत्वसमवायघटसं-
योगाभावत्वाभावस्वरूपाधिकरणत्वाधिक
णादिविषयकत्वेनप्रतिबध्नाति भूतलत्वसम
वायभूतलसंयोगघटत्व समवायघटविषयि-
णीं भूतलेघटइति बुद्धिन्तर्हि तादृशविशिष्ट
बुद्धिंप्रतिविशृङ्खलवाक्यजन्यज्ञानंविशृङ्खल
बुद्धिम्प्रतिविशिष्टज्ञानंविशृङ्खलज्ञानंप्रति
विशृङ्खलज्ञानंप्रतिबन्धकंस्यात् । नस्याद्घ
टत्वादिनापटाद्यवगाहिन्योः प्रतिबध्यप्रति
बन्धकभावः ममतुभूतलत्वनिष्ठासमवाय
सम्बन्धावच्छिन्नानिरवच्छिन्नायावच्छेदकत
ादृशावच्छेदकतानिरूपिताया विशेष्यत
न्निरूपितायास्वरूपसम्बन्धावच्छिन्नाभा

वत्वावच्छिन्नाप्रकारतातादृशप्रकारत्वाव-
च्छिन्नातद्भिन्नावायाविशेष्यता तादृशवि-
शेष्यतानिरूपितायाप्रतियोगित्वसम्बन्धाव-
च्छिन्नाप्रकारता तादृशप्रकारत्वावच्छिन्ना
तद्भिन्नावायाविशेष्यतातादृशविशेष्यता-
निरूपितायासमवायसम्बन्धावच्छिन्नाघट-
त्वनिष्ठानिरवच्छिन्नाप्रकारतातादृशप्रका-
रतानिरूपकत्वेन घटाभाववद्भूतलमितिबु-
द्धेः भूतलत्वनिष्ठसमवायसम्बन्धावच्छिन्न-
निरच्छिन्नप्रकारतानिरूपितायाविशेष्यता
तादृशविशेष्यत्वाभिन्ना तदवच्छिन्नावाया-
निरूपितत्वसम्बन्धावच्छिन्नाप्रकारता तादृ
शप्रकारतानिरूपिताया वृत्तित्वत्वावच्छि-
न्नस्वरूपसम्बन्धावच्छिन्नप्रकारतातादृशप्र-
कारता निरूपिताऽभावत्वावच्छिन्नविशे-
ष्यता तादृशविशेष्यत्वावच्छिन्नातद्भिन्ना-
वाया विशेष्यतातादृशविशेष्यतानिरूपिता-
याप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारताता
दृशप्रकारत्वाभिन्नातदवच्छिन्नावायाविशे-
ष्यतातादृशविशेष्यता निरूपितसमवायसम्ब
न्धावच्छिन्ननिरवच्छिन्नघटत्वनिष्ठाप्रकार-

ताताद्दशप्रकारतानिरूपकत्वेनभूतलेघटो-
नास्तोतिबुद्धेः अनुलोम्नाविलोम्नामाध्यमि
केनवा ताद्दशनिरूप्यनिरूपकभावापन्नेनप्र
कारत्वादिनाताद्दशप्रकारत्वनिरूपकत्वादि
सम्बन्धेनतद्घटकीभूतयत् किञ्चित् धर्म्मवि
शिष्टत्वादिनावाताद्दशबुद्ध्योस्ताद्दशनिरूप्य-
निरूपकभावापन्नविषयत्वादिविशिष्टभूतल
द्भूटवत् । भूतलेघटइत्यादिबुद्धिंप्रति प्रतिब
न्धकत्वाभ्युपगमेनापत्तिरितरोपादानात् ।
नानुपपत्तिर्वाभ्रमादानात् सिद्धिस्त्रावच्छेद
कत्वादीनामितिवैतण्डकैर्भवह्निरकामेना-
पिस्त्रवच्छेदकत्वमंगीकार्य्यमितिचेन्नप्रत्ये कं
स्वस्वक्लृप्तकारणताकानांकार्य्याणामनादि
स्थित्यातिप्रसंगाद्यसम्भवेनप्रतिबध्यप्रतिबन्ध
कभावकल्पनावैयर्थ्यात् प्रतिबध्यप्रतिबन्धक
भावकल्पनेसत्यपिच्छेयमानेवह्न्यभाववतिपर्व
तेवह्निव्याप्यधूमवान्पर्वतइतिज्ञानात् वह्नि
मान् पर्वतइत्यनुमितिप्रसङ्गः वाधज्ञानस्य
प्रतिबंधकत्वाकल्पनात् सत्वाच्चपरामर्शरूप
सामान्यकारणस्यनचवह्निव्याप्यधूमवान् इ
तिपरामर्शस्ययद्यनुगतरूपेणवह्न्यनुमितिंप्र

तिहेतुतातर्ङ्व्यभिचारः वह्निव्याप्यालोक
वानङ्गल्यानंतरंवह्न्यनुमितेरुदयादितिवाच्यं
हेतुविशेषमनिवेश्य साध्यव्याप्यवत्त्वाज्ञान-
त्वेनैवसाध्यानुमितिंप्रतिपरामर्शस्यहेतुत्वा
त् यद्यपिअन्वयव्यतिरेकव्याप्तिभेदमादाया
निवेश्यापिहेतुविशेषं व्याप्यवत्त्वाज्ञानत्वेन-
हेतुत्वोपगमेतथैवव्यभिचारस्तथा पिअव्यव
हितोत्तरत्वनिवेशेनैवकार्य्यकारणभावाभ्यु
पगमेव्यभिचारानवकाशः नचतथापिअप्रा
माण्यज्ञानास्कंदितात्परामर्शादनुमित्या
पत्तिरितिअप्रामाण्यग्रहाभावविशिष्टत्वेनै
वपरामर्शस्यहेतुत्वोपगमाद्यदिचाप्रामाण्य
ज्ञानाभावविशिष्टत्व नपरामर्शस्यहेतु त्वोप
गमेस्वधर्म्मिका प्रामाण्यग्रहसहकृताप्रामा
ण्यज्ञानास्कंदितात् परामर्शादनुमित्यनुद
यप्रसंगइतितदर्थंतचापिअप्रामाण्यग्रहाभा
ववैशिष्टनिवेशेतचापिअप्रामाण्यज्ञानोदया
त्पुनरनुमित्यनुदयेनतचापितदभाववैशिष्ट्य
निवेशेतचापितथातचापितथेत्यनवस्थायामे
वपर्य्यवसानमितिशङ्क्याव्येततथापिअप्रामा
ण्यग्रहव्यक्तित्वेनाभावव्यक्तीनांनिवेशेऽनव-

स्यानवकाशात्तथाहियादृशयादृशाप्रमाण्य
व्यक्तिसत्वेऽनुमितिरप्रामाणिकोतादृशाप्रा
माण्यव्यक्त्यभावव्यक्तीनांपरामर्शे विशेषणं
त्वोपगमोत्यद्यपि अप्रामाण्यज्ञानाभावव्य
क्तीनांतत्तद्व्यक्तित्वे ननिवेशेयत्र प्रथमतः अ
प्रामाण्यज्ञानाक्कंदितःपरामर्शः ततोभूत
ज्ञानमप्रमाण्यज्ञानांशेऽप्रमातदनंतरमनु
मितिःतत्रप्रथमाप्रमाण्यज्ञानाभावस्यनिवे
शेद्वितीयक्षणइव तृतीयक्षणेऽपिअनुमित्य
नुपपत्तिःद्वितीयाप्रमाण्यज्ञानाभावस्यनिवे
शेप्रथमद्वितीयक्षणेऽनुमित्यापत्तिःतृतीयक्ष
णेतदनुपपत्तिश्चदुर्वारैवतथापितदप्रमाण्यग्र
हाभावविशिष्टस्यक्षणविशेषविशेषितस्यवा
तादृशाप्रामाण्यग्रहस्यनिवेशान्नापत्तिर्नवा
नुपपत्तिः। नचतादृशरूपेणापिपरामर्शानां
हेतुत्वोपगमेतादृशपरामर्शबलाद्विभिन्ना-
धिकरणकसाध्यानुमितिव्यक्तीनां विभिन्ना
धिकरणेषूत् पादप्रसंगइतिवाच्यंस्वसमवेतं
प्रतिस्वस्यस्व प्रागभावस्यवाहेतुत्वोपगमात्
नचतथापिएकाधिकरणवृत्तिभावभूतव्यक्ती
नामनुमित्यापत्तिरितिवाच्यंतत्कालीनत्पन्न

त्वावच्छिन्नंप्रतितत्कालस्यापिहेतुत्वादितिचे
न्न तत्कालोत्पन्नत्वावच्छिन्नंप्रतितत्कालस्य
स्वसमवेतंप्रतिस्वस्यचहेतुत्वासंभवात्तत्का
लेकिंकुत्रोत्पद्यतेइतिप्रष्टंमयातदर्थमेवका
र्य्यकारणभावावलंवनंसचेत प्रागपिकार्य्य
कारणभावएवतःसिद्धियत स्तत्सिसिद्धिस्तस्यप्रा
गेवसिद्धित्वात्तेनैवफलमुत्पद्यतांकिंकार्य्यका
रणभावकल्पनेन असिद्धस्यचेदज्ञात् सिद्धि-
स्तर्हि विभिन्नाधिकरणकव्यक्तीनांस्वाधिकर
णवृत्तिभाविभूतव्यक्तीनांतदानीमुत्पादप्रसं
गस्यदुर्निवारत्वात्तत्कालोत्पत्तौतत्कालो
त्पत्तिविशिष्टघटितकार्य्यकारणभावस्यस्व
समवेतत्वेस्वतमवेतत्व वशिष्टघटितस्यचप्रयो
जकत्वे नियामकाणाभएवपर्य्यवसानात्त्वत
त्तत्क्षणविशेषितव्यक्तिविशेषाणांतत्तद्व्यक्ति
विशेषान्प्रतिप्रयोजकत्वावगमेतत्तद्व्यक्तेरेव
कारणत्वमास्थीयतां तेनैवसर्वोपपत् प्रशमन
सम्भवेव्यर्थं कस्यचित् प्रयोजकत्वस्यकस्यचि
त्हेतुत्वस्यचाधिककल्पनप्रयासेनकिंचयदव्य
वहितोत्तरत्वसम्बन्धेन तादृशतादृशपराम-
र्श विशिष्टस्यहेतुत्वमंगीक्रियते तस्यकोऽर्थः

क्तिमव्यवहितोत्तरत्वसम्बन्धेनतादृशपराम-
र्शवत्वं उततादृशाव्यवहितोत्तरत्ववत्वंना
द्यः तादृशाव्यवहितोत्तरत्वसम्बन्धावच्छिन्नप
रामर्शत्वावच्छिन्नाधिकरणतावत्त्वमवश्यमि
त्येववाच्यम् । अन्यथातादृश सम्बन्ध नत्य-
स्यानन्वयप्रसंगोदुर्वारः अतएवतादृशाधि-
करणतावत्त्वस्यकोऽर्थः तस्याधिकरणताव
त्त्वं तस्यकोऽर्थः तस्याधिकरणतावत्त्वमिति
क्रमिकजिज्ञासयाम नवस्थामेवपर्य्यवसानं
अन्यथानन्वयप्रसंगोदुर्वारः अतएवनद्वितीयः
तादृशाव्यवहितोत्तरत्ववत्त्वस्यार्थ जिज्ञासा
यांतथैवापत्तेर्दुर्निवार्य्यत्वात् एवंस्वक्षणध्वं
साधिकरणसमयध्वंसानधिकरणत्वेसति-
स्वक्षणध्वंसाधिकरणत्वमित्याद्यव्यवहितोत्तर
त्वनिर्वचनेतद्घटकतयाप्रत्येकंतत्तद्व्यक्तीःतत्त
धिकरणक्षणसमुदायान्निवेश्यतादृशसम
स्तव्यक्तिक्षणघटितसम्बन्धघटितपरामर्शेन
प्रयोजकत्वावगमेकारणतावच्छेदकतयासर्वे
षांव्यक्तिक्षणानांप्रयोजकत्वकल्पनस्यावश्य
कत्व सिद्धेतत्तत्क्षणविशेषितव्यक्तिविशेषा
णांलाभवात्हेतुत्वकल्पनायान्याय्यत्वात् स

त्वस्याननुगमेनव्यक्तिविशेषएवपर्य्यवसा
नात् तादृशपरंपरासम्बन्धेनपरामर्शवैशि
ष्ट्यन्निवेशस्यस्वत्वाननुगमकृतदोषवारणस्यप
रंपरायाः सम्बन्धत्वास्वीकारेणासंभवात्।
कार्य्यकारणभावानुरोधेनतत्स्वीकारासंभ
वःकार्य्यकारणभावस्यान्यथोपपादितत्वात्
परंपरायानिवेशेऽपितत्संबंधे नतद्वत्त्वमित्य
स्यकोऽर्थ इतिजिज्ञासायांपूर्वोक्तानवस्थाया
अनन्वयस्यवातिप्रसङ्गस्यवादुर्वारात् किञ्च
परंपरायांस्वत्वस्यनिवेशेऽननुगमात् अनि
वेशेवातादृशसामान्याभावाप्रसिद्धेः नवयंब्रू
मः स्वसमवेतंप्रतिस्वस्यहेतुत्वंतत्कालेत् प
न्नंप्रतिवातस्यहेतुत्वंकिंतुतस्मिन्कालेतदभि
करणेयद्यदुत्पद्यतेयस्मात् यस्मात् तस्यैवप
रिचायकमितिचेन्नइष्टत्वात्अन्यतमत्वादि
नाप्रकारांतरेणापिपरिचयसंभवात्नहिक
स्यचित् प्रतितंचसिद्धपरिचयव्यवहारः कं
चित्पदार्थंसाधयेत्बाधयेद्वा। अन्यथाबौद्धा
दीनांपंचस्कंधादिपरिचयः कंचित् पदार्थं
साधयतुमल्कृतोऽप्याधुनिकः कश्चित् दृष्टा
प्रत्ययौविरुद्धा एवसर्वैसिद्धिर्महेयुः येहिनै-

कथावतिष्ठेरन् अवशिष्टाज्ञानाद्यनंतसंसा
रेभाविनोनिर्वंधार: नजानीम:किंकार्यमिष्ठं
तितन्मतसिद्धाह्यवशिष्टास्ते पदार्था: इष्टाप
त्तौमोक्षभंगप्रसंग: षोडशपदार्थतत्वज्ञाना
त् षट्पदार्थतत्त्वज्ञानाच्च याभुक्तिरभिहिता
तस्यानिरूपितपदार्थसमुदयतत्त्वज्ञानापेक्ष
त्वात् अद्यापिभवन्मते एवैषाम निरूपणात्
तादृश पदार्थानामस्वीकारे एतेषामपितैर
स्वीकार्यत्वसम्भवात् किंचकल्पितैतादृशवा
क्यात् किंश्चिद्धंमतकार्य्य कारणभावोऽववो
ध्यतेउतविलास: क्रियतेनाद्य:तादृशवाक्या
त्तादृशार्थस्यशाब्द:वोधानुदयात् अन्यशब्दे
नान्यावबोधनस्वीकारे अस्माकमपितथास-
म्भवात् एतेनाननुगतरूपेणकार्य्य कारणभा
वादिकल्पनेपदार्थानां दुर्ज्ञेयतयाविज्ञानास
म्भवेनमोक्षभंगप्रसङ्गइत्यप्यपास्तम् ॥

किंचयत्कार्य्य कारणभावानुगमेनसर्वान्
पदार्थानधिगम्यमनुमोक्ष माप्नुमिच्छततदुच्य
तांमोक्षाभिलाषिभिरवच्छेदकत्वादिवादि
भिर्भूतेभविष्यतिवर्तमानेच कालेकुत्रकिमुत्
पन्नमुत् पद्यतेउत्पत्स्यतेचकार्य्य यद्विज्ञा:

नेनसंसारमुक्तिः स्यात्तन्नवयंजानीमः यो
गादेवतथाज्ञानंतिदृतिचेत् व्यर्थप्रयोजनता
मर्हतितावत्भवतामपलापःक्षिप्यतांयोगा
नुष्ठासनंतेहिनैव मपलपंतियोगिनइतित
त्सहायाएतइतिचेत हेयत्वविषयादुष्टस्यापि
सहायत्वंअतएवभाष्येकेचनकषायाःपक्वाःप
च्यंते पच्यमानाइत्यादिनाभगवन्नारायण-
व्यासचरणैःशब्दादिविषयहेयत्वस्योक्तत्वात्
किंचयत्कार्य्योणामुत्पत्तिमवलंब्यकार्य्यकार
णभावानुगमनिर्वाहायावच्छेदकत्वादिकमु
ररीक्रियते तत् किमसतांसतांसदसतांवो-
त्पत्तिराश्रयानाद्यः असतामुत् पद्यमा-
नत्वेप्रथमतो गगनकुसुमादीनामिवज्ञाना
दीनामरुत्वसाम्येनएतेषामिवतेषामुत् पत्ते
र्दुर्निवार्य्यत्वात् नचवाच्यं यच्चयत् शक्तं तत्
तदुत् पादयेत् गगनकुसुमादौकेषामपिश-
क्तत्वाभावेनतदुत् पत्तेर्वारणासंभवादिति भ
वतांनयेशक्ते रनंगीकारात् अंगीकारेपिका
र्य्यतः प्राक्शक्तेरसन्निरूपितत्वासंभवात् न
ह्यरुत् किमपिनियंतुमर्हतिस्वरूपाभावात्
यदायदुत् पद्यतेतदातन्निरूपितशक्तिस्तचां

गीकार्य्येतिचेत्तन्निरूपितधर्म्मत्वस्याङ्गीकारे<br>ऽपिच असम्बन्धात्तदुत्पत्तेस्तुदुर्निवार्य्यत्वा<br>त् असम्बन्धात् कार्य्योत् पत्तिस्वीकारेऽसम्<br>बन्धत्वाविशेषेणसर्वेभ्यःसर्वकार्य्योत्पाद प्र<br>संगात् फलानुरोधित्वंकल्पनायाइतियच्चय<br>थादृष्टं ततच्चतथाकल्पनमितिचेत् किन्नाम<br>कारणत्वंकार्य्यप्राक्क्षणावच्छेदेनकार्य्या<br>धिकरणवृत्त्यभावाप्रतियोगित्वे सतितत्तद<br>न्यथासिद्ध्यनिरूपकत्वमितितर्हि ततः प्रागे<br>वंकिंचिदस्तीत्यवगम्यतेतदुत्पत्तिस्तु कुतो<br>नज्ञायते तच्चतदुत्पत्तिप्रयोजकत्वादिकंकिं<br>चिद्विलक्षणमंगीक्रियेतचेत् कार्य्यतः प्राक्<br>तस्यासत्वे नसतोऽसन्निरूपितधर्म्मवत्त्वप्रसं<br>गोनिर्युक्तिकइत्येवाभिप्रेत्यकल्पना प्रसंगश्च<br>विफलएवकिंचकार्य्यप्राक्क्षणेकार्य्यासत्वे-<br>नतदानींकार्य्याधिकरणत्वस्यासंभवएवपरं<br>परायाः संसर्गत्वमंगीकृत्यकथंचित्कार्य्यास-<br>त्त्वकाले कार्य्यवत्त्वांगीकारेपितादृशपरंप<br>रासम्बन्धेन कार्य्यसत्वमित्यस्यकोऽर्थ इति<br>जिज्ञासायांपूर्ववदनवस्थायाम्वानन्वयेवास्व<br>त्वाननुगमादिदोषएववापर्य्यवसानम् एवं-

योत्पत्तिराश्रीयतेसतीसावाऽसतीवासदस
तीवासतीचेत् सर्वदैवकार्य्योत्पत्तिर्दुर्निवा
राअसतीचेत्तस्याअपिउत्पत्तिर्वाच्यातस्या
अपितयातस्या अपितयेत्य नवस्थायामेवपुन
र्विश्राम: उत्पत्ति:सतीतत् सम्बन्धस्त्वसन्नि
त्य,ज्ञावपिसम्बन्धस्य कादाचित्कतया तदुप
त्तिरप्यवश्यमंगोकार्य्यातत्रापिपूर्ववद् जिज्ञा
सायांपूर्वोक्तदोषससुदायो दुर्निवारएवकिंच
उत्पत्त र्घटस्रपत्वेयावदुच्यते घटइतितावदु-
च्यतासुत्पद्यतइतिनोच्यतांचघटउत्पद्यत-
इतिपौनरुक्त्यात् अनुपन्नस्याभेदेउत्पत्तिमा
न्घटइतिव्यवहार: अतएवाविर्भावतिरोभा
वांगीकारेऽपिननिस्तार:उत्पत्त्यनुषंगिदो-
षसमुदायप्रसंगात्नत्तृतीय:प्रकाशात्मकांध-
कारवत्सदसद्रूपपदार्थासम्भवात् अथयदि-
नासतांनसतां नसदस तासुत्पत्तिस्तदाके
षामितिचेत् आगच्छं:तावत् सिद्धांतमार्गे
य: करोतिसएवजानातिकिंजानीमोवयम-
चिन्त्यरचनस्यभगवतोऽविचिंत्यमूलविश्वरच
नवैचित्र्यंमूढाएवसर्वेइति पृच्छामस्त्वान्यदपि
किंचित् यत् तदवच्छिन्न विषयताशालि-

ज्ञानत्वावच्छिन्नं प्रतिधर्म्मविशेषावच्छिन्नविष
यताशालिज्ञानस्यानुगत रूपेणकारणत्वप्र
तिबंधकत्वादिकमुच्यतेतत्‌किंसजातीयविजा
तीयव्यवच्छिन्नतत्प्रतीत्यर्थंउतकारणत्वादि
प्रतीतयेतच्चिह्नदर्शनार्थंकिंवाव्यवहारार्थंञ्चा
होप्रवृत्तिनिमित्तावधारणार्थं नाद्य:सजाजो
येत्यत्रकिंकारणेतराहृत्तिकारणासाधारण
प्रकारणत्वादि नाउतकारण विशेषासाधा-
रणरुपेण यथाकथंचि द्रूपेणवाञ्चाद्येव्यच्छे
दप्रतियोगिन: सजातीयादव्य वच्छेदेनव्यव-
च्छेदानुपपत्ते:तादृशधर्म्मस्यस्वस्वे तरोभय
वृत्तित्वात्‌ द्वितीयेस्व स्मिन्‌ स्वभेदासम्भवात्‌
तृतीयेप्रमेयत्वादिनासर्वेषामेवसाजात्येनवि
जातीयनिवेशवैफल्यात्‌ उक्तदोषावकाशाच्च
अथतद्भिन्नत्वे सतितद्गत भूयो धर्म्मस्यतत्त्वे न
विवक्षणेनोक्तदोषइतिचेत्‌तर्हि तद्भिन्नभेदइ
त्यैवोच्यतां किंसजातीयविजातीय स्वरुपभि
न्नाकारनिवेशनेनइष्टापत्तौस्वभिन्नत्वंकिंये
नकेनरूपेण उतस्वासाधारणरूपेण आद्ये अ
भेोऽतिप्रसंगोवा । द्वितीयेतादृशलक्षणज्ञा
नात्‌प्रागन्यदिविशिष्टबुद्धिनिर्वाहायस्वभिन्न

ज्ञानमितरच्चापेक्षितं तर्ह्यर्थादेवेतरभि-
न्नत्वज्ञानमपिस्मिन् सम्भवतीतिगतमुक्त
रीत्यलक्षणप्रयोजनेनतत्पूर्वमपितत्सिद्धेः
किंच येनासाधारणरूपेणप्रथमतस्तद्विज्ञा-
नंतस्यैवानायाससिद्धस्य प्रथमोपस्थितस्य-
लक्षणत्वमस्तुकिमनेनलक्षणेन तस्य गुरु-
त्वादस्थलक्षणत्वमितिचेत् तर्हि तस्यवक्त
व्यतापातः अवक्तव्येऽभावबुद्धौप्रतियोगिता
वच्छेदकविशिष्टप्रतियोगिज्ञानस्यहेतुत्वे नभे
दज्ञानासंभवः अनेनैवतज्ज्ञानेऽन्योन्याश्र-
यएवपर्य्यवसानं किंचतद्वक्तावपितचपूर्ववद
जिज्ञासायांपूर्वोक्तदोषसमुदायप्रसंगः। अ
तएवतत्राभीष्टापत्तावपिननिस्तारःएतेनद्वि
तीयोऽपिनिरस्तः कारणत्वप्रतीतिमन्तरे
णतत्प्रतीत्यनुपपत्तेः। तदवगमाच्चास्यप्रती
तावन्योऽन्याश्रयप्रसंगोदुर्वारः रूपांतरेणत
दवगमेतस्ययथाकथंचिद्रूपत्वेऽतिप्रसंगः अ
साधारणरूपत्वे तस्यैवतथात्वप्रसङ्गेनास्यवै
फल्यंतत्राभीष्टापत्तौननिस्तारः तद्दोषताद
वस्थ्यात् नतृतीयः सत्त्वेवंरूपोवाच्यः यत् त
त्प्राक्लक्षणावच्छेदेन तत्समानाधिकरणाभावा-

प्रतियोगिविलक्षणं वाकिंचित् अयमर्थोऽ
नुपपन्नः लक्षणस्यज्ञातुमशक्यत्वात् व्यवहा
रंप्रतिव्यवहर्त्तव्यज्ञानस्यहेतुत्वे नतेनरूपेण
रूपांतरेणवाज्ञानेकथितदोषसमुदायप्रसङ्ग
स्य दुर्वारत्वाच्च अतएवनचतुर्थः कल्पनागौ
रवदोषस्याधिकः यथैषकल्पः प्रतिपाद्यतेसा
शक्यनिरूपणाचप्रवृत्तिः स्फुटीभविष्यत्यग्रेषा
ब्दप्रमाणखंडनप्रकरणे। नापिपंचमः तस्य
दर्शयितुमशक्यत्वात् दर्शनीयत्वे पूर्वोक्तदोष
समुदायप्रसङ्गात्तद्वयमेवरीतिलक्षणमाचखं
डनेष्वभियोजनीया अस्याः सपरिकरंसामा
न्यन्द्रष्टव्यमाकरे अपरमन्यद्व्यक्तीभविष्यति
चाग्रेष्विति । इदमप्यवधारयितुमस्माकम-
स्तिकतूहलंयद्विशिष्टविषयकत्वादिनाज्ञान
मनुगमय्य किंचिद्रूपावच्छिन्नज्ञानंप्रतिका
रणत्वादिकमिच्छतानुगतरूपेणतवष्टच्छा-
सःताद्दशविशिष्टविषयकत्वं ज्ञानादनतिरि
क्तमतिरिक्तंवा आद्येप्रतिव्यक्तिभिन्नत्वे नप्र-
तिक्षणमुत्पादविनाशवतांज्ञानानांकानुगम
कर्ता द्वितीयेइदानीं कास्तितत्त्वंयदचैवभ
विष्यतिज्ञानेसम्बद्धं स्यात् नहिपरमाण्वादी

नामिवास्तितस्यक्रियावत्त्वं येनान्यत्रतिष्ठद
न्यत्रसंचरेततत्कालादौसम्बद्धं यथासमयं
जायमानेज्ञानेष्टत्तिमाप्नोतीतिचेत् तर्हिका
लादेः कारणत्वादिकंप्रसज्य तद्दृष्टापत्तौका
रणप्रतिबंधकता वच्छेदकरूपद्वयस्य सर्वदा
कालेसुलभस्यसत्वेनकार्य्य मात्रानुत् पादप्र
सङ्गः। कथंम्वाकालेवर्त्तमानंज्ञानेवावेत् क्रि
याभावात् एतेनकालादौकालिकादिनातद्व
र्त्तित्वज्ञानेतुस्वरूपेणेतिसम्बन्ध विशेषमंतर्भा
व्यकार्य्य कारणभावादि कल्पनेनोक्तदोषद्व
त्यपिपरास्तं नचतद्गगनादिकमिवविभूत्वा
धिकरणं येनगगनादिनामूर्त्तमिवस्वेनज्ञा
नमात्रंसंवध्यतेअतएवोत्पन्नेज्ञानेतत्संबंधो
जायतइत्य पिनिरस्तम् । अतएवमनोरथ-
मात्रमननुगतरूपेणकार्य्यकारणभावादिक
ल्पनम् इयमेवरीतिः प्रतिभावाद्भिः समा
लोचनीयाव्यक्त्यतिरिक्तजात्य खंडोपाध्यादि
रूपसामान्यधर्मोच्छेदिनी ॥

केचित्तुयदिकार्य्य कारणभावस्यप्रतिबध्य
प्रतिबंधकभावस्याचाननुगतरूपेण कल्पने-
चिरमनच्छवित्तेपञ्चात्मानंवाधयेतस्त्रीक्रिय

तांतावद्गच्य माणरीतिः तथाहिसमवाय-
निरूपितंयद्घटत्वं तन्निरूपितत्वे सतिसं-
योगनिरूपितोयत्तन्निरूपितत्वे सतिसम
वायनिरूपितं । यद्भूतलत्वं तन्निरूपितं
यत्तन्निरूपकत्वे नभूतलंघटवदितिबुद्धेःस
मवायनिरूपितं यद्घटत्वं तन्निरूपितंयत्-
तन्निरूपितोयः संयोगःतन्निरूपितत्वे सति
स्वरूपनिरूपितंयदभावत्वं तन्निरूपितोयः
स्वरूपनिरूपितस्तन्निरूपितत्वे सतिसमवा
यनिरूपितभूतलत्वनिरूपितं यत्तन्निरूप-
कत्वे नभूतलंघटाभाव वदितिविशिष्टबुद्धिं
प्रतिप्रतिबंधकत्वकल्पनेनैव भ्रमप्रमात्मक-
बुद्धिसमुदायसंग्रहसंभवेकिंनिर्युक्तिकव्यामो
हकावच्छेदकत्वकल्पनेन नचबाच्यमपदार्थी
नामवच्छेदकत्वादीनामेवनिरूप्यनिरूपक
भावः नचपदार्थानांघटत्वादीनामिति ए-
तद्दोषाणामुक्तत्वात् अथताद्दशरूपेण प्रति
वध्यप्रतिबंधकभावकल्पने घटत्वत्वे नघटत्वा
त्वगाहिन्याघटत्ववत्वानितिविशिष्टबुद्धेः प्र-
तिबंधकत्वापत्तिस्तचताद्दशरूपस्यसत्वात्मम
तुनिरवच्छिन्नघटत्वनिष्ठविषयत्वादिनिवेश

नतद्वारणसम्भवः भवतांतथांगीकारेनिरव
च्छिन्नत्व मित्यत्राभाव प्रतियोगितयावच्छि
न्नत्वसिद्धिरप्रत्यूहैव नचतद्वारणायघटत्वेऽ
न्यानिरूपितत्वनिवेशइतिवाच्यं तथासतिस
र्वत्रैवस्वस्मिन् स्वसम्बन्धनिरूपितत्वेनासम्भ
वापत्तेरितिचेन्न शुद्धतादृशधर्म्मघटितबुद्धेः
प्रतिबंधकत्वे तस्यनिरूपितनिरूपितानिरू-
पितत्वस्य विशेषणत्वात् यद्यप्येवस्तनपदार्थो
नादायसर्वत्रैवनिरूपित निरूपितत्वस्यसत्वे
नपुनरसम्भवस्तथापितन्निरूपितंयत् तन्नता
दृशनिरूपित निरूपितनिरूपित निरूपितंकिं
तुशुद्धे नतेननिरूपितत्वात् निरूपितनिरूपि
ता निरूपितनिरूपि तंतस्यता दृशनिरूपित
निरूपितनिरूपितनिरूपितत्वे तेनरूपेणभा-
नस्यावश्यकतास्यात् नचतथाऽन्यथानिर-
वच्छिन्नत्वनिवेशेऽपिनिरवच्छिन्नत्वमित्यस्या
वच्छेदकत्वानिरूपकत्वमित्यर्थत्वे अवस्तनाव
च्छेदकतामादायतत्रता दृशावच्छेदकतानिरू
पकत्वसत्वेनभवतामपितद्दोषतादवस्थ्यं दु-
र्वारमेवतस्मादस्माभिरंगीकृतमंगीकर्त्तव्यमे
वत्रावच्छिन्नत्वस्यकिंचिद्विलक्षणपदार्थत्वांगी

कारे निरूपितत्वस्यापितावता किंद्विलक्षण
त्वंवक्तुंनिर्बाधत्वमेवअतएवयथैवसुखस्याश्रयं-
निरावरणदर्पणेतत्तथैवामलछायांविम्बमा
दातुमर्हति ॥ अथतथापिघटत्वानित्यत्वघट
त्वेनघटावगाहिनस्तेनचपटावगाहिनो भ्र
मप्रमाद्वयस्य नसंग्रहः विषयस्यवैलक्षण्यादि
तिचेत् भवद्भिरपिविषयभेदे यथातत्रावच्छेद
कत्व विषयत्वस्यैक्य मंगीकृत्यतत्रघटत्वनिष्ठ
नावच्छेदकत्वे नविषयत्वे नवानिरूपितत्व
मास्थायताद्दृशावच्छेदकत्वाश्रयत्वेनविभिन्न
योरपिविषययोरनुगमः स्वीक्रियेततर्हिअ
स्माभिरपितन्निरूपितत्वस्यैक्यमंगीकृत्यतदा
श्रयत्वेन तद्विषयद्वयानुगमोनदुर्वचः स्यात्
किन्तुसाहसं पुनर्विभिन्नयोरेकावच्छेदकत्वा
द्यंगीकरणं मात्स्ववच्छेदकत्वादीनामैक्यंता-
निविभिन्नान्येवतथापिअवच्छेदकता त्वादि
नानुगतधर्मेणधर्मिणिनिरूपितत्वान्वयमाश्रि
त्यतदाश्रयत्वेनानुगम इतिचेन्निरूपितत्वस्यै
क्यतद्वत्त्वेनयदिविभिन्नानामवच्छेदकत्वादी
नामनुगमः तर्हिकिमपराद्धं खलुविभिन्ना
भ्यांविषयाभ्यांतयोरपितेनानुगमः सुवचए

वंशभिन्नेष्ववच्छेदकत्वादिवत्किंचिदनुगतध
र्मोकांच्चायांप्रमेयत्वादेरेवसुलभत्वातनचव
क्तुं शक्यं तयेनरूपेणा यस्य विषयत्वं तेनरूपेण
तस्मिन् धर्म्मिणीतरान्वयोव्यु त् पन्नइतिघट
वानितिबुद्धौअवच्छेदकत्वादिनावच्छेदकत्वा
देरविषयत्वात् ताद्दशविषयस्यतेनरूपेणाङ्गी
कारेतस्यनियतत्वे प्रच्छिद्यतांप्रत्तेरकविषय
बोधः सर्वत्रैवेष्टपत्त्यानुभवापलापः प्रत्यत्ता
दौतुपूर्वंविशेषणाज्ञानस्यावश्यकत्वेनतदंतरे
णाताद्दशबोधासम्भवः नहिकश्चित्घटवानि-
तिविशिष्टबुद्धेःप्राक्नियमेनावच्छेदकत्वादि
कंजानातिविशेषणज्ञानंविनातद्विशिष्टबुद्धि
स्वीकारेतेषामिवेतरेषामपिज्ञानविषयत्व
प्रसङ्गोदुर्वारःकारणाभावस्योभयत्रैवसाम्या
त शाब्देतुशक्यार्थबोधप्रसङ्गासम्भवएवघटप
दस्यताद्दशावच्छेदकत्वादिघटितार्थस्याशक्य
त्वेनसर्वत्रैवताद्दशार्थेलक्षणायाअंगीकारा
त् नहिकश्चित् घटपदंताद्दशावच्छेदकत्वादि
घटितार्थेशक्तमित्यभ्युपै तियेनसएवशक्यार्थ
बोधइत्यङ्गीक्रियेत अनियतत्वेतुयत्तथाबो-
धोनांगीक्रिते तत्तथानियमभंगप्रसङ्गोऽत्रं

घनीयएवअतएवताहृशस्थलभेदीयथैवसाध नीय:तेनैवसर्वत्रोपपत्तिसम्भवेकिमलीकानि र्युक्तिकावच्छेदकत्वादिकल्पनेन। नवयंब्रुम: घटोनास्तीतिविशिष्टबुद्धौअवच्छेदकत्वादे: प्र कारादिविषयाविषयत्वं किंतुसंसर्गविधयैवे तिचेत्तस्यप्राक्विज्ञानमंतरेणाविषयत्वेसर्वे षामेवाधितानांएकस्मिन्ज्ञानेसंसर्गविधया भानापत्तिर्दुर्वारावबाज्ञानस्य प्रतिबंधकत्वे प्राग्घटज्ञानात् कियंतोबाधावर्तंतेयेह्निस्व स्वप्रतिवध्यानिनावगाहयेयु:नचबाध्यंतात् पर्य्यवलात् तज्ज्ञानमितिभवदतिरिक्तानां तथातात् पर्य्यविरहात् भवतांतथातात् प र्य्यंतुताहृशपदार्थानांनियुक्तिकतयागगनकु सुमादिवत् अलीकवोधविषयतां भ्रमविषय तांवावयंकल्पयाम: अस्माकमपिनिषिध्येत्त सिध्येच्चानिर्वाच्यएववाद:इदंत्वस्माकंयौक्तिक मित्युक्तौतचयुक्तिजिज्ञासायांपूर्वोक्तदोषसमु दायप्रसङ्गोदुर्वारएवअस्तुवातात् पर्य्यमस्य भाननियामकंतत्र पृच्छामोवयंकिंताहृशाव च्छेदकत्वादिघटितसंबंधेनज्ञानेविषयस्यभूत मस्मिंश्चिप्रकारस्यभानंनाद्य: तथासतिभूत-

लं घटवदिवाक्यात् भूतलांशे घटवत्त्वावगाहन
स्यासंभवात् संभवाच्च ज्ञानेविषयवत्त्वस्य नहि
कश्चिदेवमभ्युपैतितथावाक्यात् ज्ञानं घटवद्
भूतलवद्वेतिदृष्टापत्तौ सर्वत्रैव ज्ञानेतुल्ययुक्त्या
विषयवत्त्वमनुभवतां भवतां धर्म्मिणि विषये वि
षयवत्त्वानुभवो विलोपमर्हेत्किंच यादृशयु-
क्त्या धर्म्मिणि विषयावगाहनमुपेत्य ज्ञाने तद्व
त्त्वानुभवमंगीकुरूथ तत्रापि विषयानुभवे ता
दृशयुक्तिस्तज्ज्ञानेऽपि तादृशविषयमनुभाव
यतु तज्ज्ञानेपितथेत्यऽनवस्थायां वापर्य्यवानं
क्वचिद्गत्वाविश्रामे तत्र यदि विषये धर्म्मिणि
स्वतएवधर्म्मावगाहनंप्रथमतः किंनतथेत्यत्र
नियामकस्तुल्यएवयुक्तिरपि प्रथमएवास्माकं
नतथाभवतामप्राथम्यात् नद्वितीयः विलुप्य-
तांसंयोगसमवायत्वादिना क्वचापिधर्म्मिणि
कस्यचिदवगाहने संसर्गतासर्वत्रैवावच्छेदक
त्वादिनाविषयावगाहनात् संयोगादेः संस
र्गत्वमित्यत्रतादृशसंबंधावच्छिन्नावच्छेदक
त्वादौतात्पर्य्यमितिचेत् किंपुनः घयेसात् घ
टादीनांभूतलादौसंयोगादिनासत्त्वं सर्वत्रैव
तादृशावच्छेदकत्वादेः संसर्गत्वेनावगाहना

त्कथंवास्वीकुरुतप्राचीनाचार्य्याभिमतसंयो
दिनाविषयवगाहितामुपेच्यताहृशावच्छेदक
त्वादिनावगाहनंतचापियुक्तिजिज्ञासायांते
षांसंयोगादिघटितत्वेनलाघवात् तेनैवतद
गाहनंसिध्येत नतुतद्घटित संयोगाद्यवच्छि
न्नावच्छेदकत्वादेः संयोगादेः साक्षाद्वापरंप
रयावोभयवादिसिद्धत्वादवगाहनस्य अतए
वेष्टापत्तावपिननिस्तारः तस्यार्थविकल्पेपू
र्वोक्तदोषसमुदायप्रसङ्गात् भ्रमेचानुपपत्तेः
एतेनविषयेधर्म्मिणिविषयस्य संयोगादिना-
ज्ञानेचताहृशावच्छेदकत्वादिनावगाहनंप्र
त्युक्तविषयेष्ववगाहनेनैवचरितार्थत्वात् अ
नुभवाभावाच्च ज्ञानेष्ववगाहनस्यज्ञानेताहृ
शपदार्थस्यनावगाहनंकिंतुसत्त्वमितिचेन्नत
त्रप्रमाणजिज्ञासायां पूर्वोक्तदोषसमुदायप्र-
सङ्गात इत्यलं पल्लवितेनतिवदन्ति परेतु अ
भावादेर्विशेषविधानायतत्रविलक्षणायाः प्र
तियोगितायाज्ञानेचविषयताया अंगीकारे
णसामंजस्यसंभवेव्यर्थमवच्छेदकत्वादिकल्पने
ननचवाच्यम्विनिगमकाभावात्विषयतावत्
अवच्छेदकत्वमपिसिध्येदितिअवच्छेदकत्वां-

गीकारिणाम पिमुख्य विशेष्याद्य नुरोधेन विषयत्व स्वीकारस्यावश्यकता विषयत्वांगी कारिणांना वच्छेदकतायादृतित्रिषयतायाञ भयवारिसिद्धत्वस्यैवत्रिनिगमकत्वादित्याहुः सर्वैकथितायुक्तिः पूर्वपक्षात् स्थताहिंसास मयोजनात् धीरादवयत्वखिन्नंमलम् ॥ पं थानिष्कासितोऽस्माभिस्तत्त्वमंदिरगामिनां कंटकानपरान्धीराः शोधयंतुस्वयंदृशा ॥ इ तिश्रीकाशीराजवदखिलगुणसंपन्नश्रीकाशी राजसभासद्वरभट्टपल्लीनिवासिवशिष्ठवंशर- त्नाकरसम्भ श्रीताराचरणशर्म्मविरचितेखं डनपरिशिष्टेप्रथमपरिच्छेदः समाप्तइति ॥